UGC- CARE Listed

ISSN : 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED & PEER- REVIEWED QUATERLY RESEARCH JOURNAL)**

45 वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) 2020 ई.

प्रधानसम्पादकः

**प्रो. रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**प्रो. शिवशङ्करमिश्रः**

शोधविभागाध्यक्षः

सहसम्पादकः

**डॉ. ज्ञानधरपाठकः**

शोधसहायकः




**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**

केन्द्रीयविश्वविद्यालयः

नवदेहली-110016

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**
बी-4, कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-110016



**ISSN :- 0974 - 8946**

45 वर्षे चतुर्थोऽङ्कः (अक्टूबरमासाङ्कः) 2020 ई.

बेवसाइटसङ्केतः - www.slbsrsv.ac.in
ई-मेलसङ्केतः - shodhaprabhalbs@gmail.com
दूरभाषसङ्केतः - 011-46060609, 46060502

सूचनाः- शोधपत्रलेखकैः स्वशोधपत्रे दूरभाषाङ्काः अवश्यं लेखनीयाः

मुद्रकः - गणेशप्रिंटिंगप्रेसः, कटवारियासरायः नवदेहली-16

# शोधप्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य

## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- एषा त्रैमासिकी शोध-पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका-टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- शोधपत्रलेखकाः शोधपत्रस्यान्ते पत्राचारसङ्केतः दूरभाषसंख्या, ईमेलसङ्केतश्च अवश्यं लेखनीयाः।
- पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशित-शोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00 पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशिः **कुलसचिव, श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय,** नई दिल्ली-16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः वा ई-बैंकमाध्यमेन देयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **'सम्पादक' शोध-प्रभा'** **श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय (केन्द्रीय विश्वविद्यालय), कटवारिया सराय, नई दिल्ली- 110016** इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

भवति हि विज्ञानां काचित् कारुण्यपूर्णा दृष्टिः यत् ते स्वीयहार्दोपप्लुतकारुण्यचेतसा तपोऽर्जितमार्षं विज्ञानं समुद्भाव्य जगतोऽस्य कल्याणैकमुरसिकृत्य निर्व्याजं वाग्धेनुं परिदुह्य सर्वमपि कल्याणजातं नवनीतमिव प्रत्यक्षं परिकल्पयन्ति। प्रतिभा च तदेव वन्द्या या जगत्कल्याणाय अजस्रं क्षमा, तदेवोक्तं मकरन्दस्तोत्रे **तां नित्यां शम्भुशक्तिं त्रिभुवनजननीं पालयन्तीं जगच्च** इत्यादि। अत एव कारुण्यधारामृतगलितश्रवेण आप्लावयन्ती कविभटवाङ्माधुरी अज्ञानेषु निपतितं ज्ञानामृतविधुरजनजातं जरन्तमिव भूतलेऽवस्थितं सर्वं समुद्धर्तुमिव वत्सलीकृत्य संसारमुपजीवयन्ती कयाचित्कारुण्यदृष्ट्या सर्वथैव परिपुष्णाति। इदमेव वाचः कामधेनुत्वम्, इयञ्च वाक् सर्वास्ववस्थिता सती जनमात्रं जीवातुमिवोपस्थाप्य समेधयत्याप्लावयति च। अत एव **सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते तन्मात्रामप्यतिक्रान्तं चैतन्यं सर्वजन्तुषु** इत्यादि वाग्विदां संघोषोऽपि स्वीयं चारितार्थ्यमुपसेवते। एतदेव अन्यत्राऽपि अभिहितं भवति ज्ञानपिपासुभिः **मिथ्याज्ञानान्धकारे पतितमनुदिने पाहि मामक्षहीनम्** इत्यादि। अद्यत्वेऽपि छात्रैः यद्येवं दृष्टिरवधार्यते तदा तदुद्धाराय सर्वसमर्थां वाचमवलम्ब्य आचार्या अपि अविरलोपायधनाः छात्रहिताय सर्वथैवोद्यताः भवन्ति इति प्रत्यक्षमेम्यहम्। अद्यतनी या परिस्थितिः सा सर्वथैव अञ्जसाहितोपायाधीना इति निर्विवादं मत्वा आर्षमधीयन्तः शास्त्राणि विचिन्त्य विनिश्चित्य च सहस्रश्लोककदम्बस्य सारजातं कतिपयैः वाक्यैरवगुम्फ्य व्यवस्थाप्य सर्वहिताय श्रेयसे च इहामुक्तफलप्रदाने सर्वथा कल्पितं न जातुकदाचनक्षीणमुपकल्प्य तत्त्वरत्नं परिष्कृतिविधानाय अहमहमिकया परिस्रवद्बिन्दुभिः प्रभूतं परिकल्पयन्ति। तदेव सर्वं निबन्धमाध्यमेन संकलय्यास्य विश्वविद्यालयस्य प्रकाशनविभागेन अत्यन्तं साधुजातं अक्षरेणापि अपतितं सर्वथा शुद्धं लिप्यात्मना उपस्थाप्यते। मन्येऽहमेकैकमक्षरं विशुद्धं चेत्तदा अविच्छिन्नतया झटिदेवार्थोपस्थितिस्तदा अस्य प्रकाशनविभागस्य कर्मेदमत्यन्तं प्रशस्तं जायत इत्यप्यहं सम्यगेव वेद्मि। वयुनदानमेव प्रशस्तमित्यतिरोहितमेवेति हेतोरपि सुधियां ज्ञानत्वसमेधनाय आचार्याणामपि महान्तमुपकारं मत्वा तान् प्रीत्या संयुनज्मि यत्तेऽपि समेधेरन्। अन्येऽपि अध्येतारःकर्मरताश्च जनाः ज्ञानिनो भवन्तु इत्यभ्यर्थमानः कर्मणानेन परां मुदमादधत् प्रीत्या युङ्क्ते।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# सम्पादकीयम्

संस्कृतं भारतीयसंस्कृतेः जीवातुभूतं तत्त्वम्। संस्कृतं नाम दैवी वाक् अन्वाख्याता महर्षिभिः। एतत्प्रभावादेव निखिलेऽस्मिन् जगति प्रतिष्ठतास्माकं भारतीया संस्कृतिः। भारतीयसंस्कृतेः वैभवाद् कृत्स्नेऽपि नभसि भारतस्य गौरवपताका दोधूयमाना विराजते। इयं च संस्कृतिः संस्कृतं विना सर्वथा निष्प्राणभूता। अतो भारतस्य ज्ञानवैभवम्, भारतस्य गुणगणगौरवम्, भारतस्य विपुलमैतिह्यम्, भारतीयं जीवनं, चरित्रं, शस्त्रं, शास्त्राञ्चावबोद्धुमेकमेव यत् श्रेष्ठतमं साधनं वरीवर्ति, तदस्ति संस्कृतम्।

संस्कृतमाध्यमेनैव भारतस्य विस्तरेण परिचयः प्राप्तुं शक्यते। भारतं यैर्गुणनिचयैः स्वस्मिन् माहात्म्यमवधारयति, विश्वेऽस्मिन् वैशिष्ट्यमावहति तत्सर्वमत्र देववाणीतः समागतम्। किं बहुना भारतस्य व्याख्या परिभाषा च संस्कृतेनैव व्याख्यातुं पार्यते नान्यथा, अतएवोच्यते-

**संस्कृतेनैव सुसम्पुष्टं भारतं भारतमुच्यते। संस्कृतेन विना देशः केवलं चेण्डियोच्यते।।**
**उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्। वर्षं तद् भारतं नाम भारती यत्र सन्ततिः।।**

संस्कृतमस्मासु संस्कारं जनयति, ऐक्यं सम्पादयति, विश्वबन्धुत्वं स्थापयति, मित्रभावं परिष्करोति, संगच्छध्वं संवदध्वम् इति भावं दृढ़ीकरोति, सर्वेऽपि सुखिनः सन्तु इत्यौदार्यं सन्दिशति, किमधिकं सर्वत्र शान्तिसंस्थापनाय, अहिंसा-सत्य-अस्त्येय-ब्रह्मचर्य-अपरिग्रहभावानां विस्ताराय, शौच-सन्तोष-तपः- स्वाध्यायेश्वरप्रणिधानाय भारते संस्कृतमेवानितर-साधारणसाधनं सम्भवति। इयमत्यन्तं लोकोपकारिका, अमृतसमा, माधुर्यसंवाहिका, कर्णौ सुखं ददती आत्मन्याह्लादं जनयति, लोकं ददाति लोकोत्तरञ्च संसाधयति अतएवोद्घोषितं केनचित् कविना-

**अमृतं मधुरं सम्यक् संस्कृतं हि ततोऽधिकम्।**
**देवभोग्यमिदं तस्माद्देवभाषेति कथ्यते।।**

भारतीयज्ञानपरम्परायाः महत्त्वमुपस्थापनायैव नूतनशिक्षानीतौ (2020) भारतीयभाषाणां वैशिष्ट्यं प्रकाशितम्। भारतस्य यत् स्वीयं ज्ञानविज्ञानं विद्यते तद् भारतीयभाषास्वेव विराजते, यदि वयं भारतीयां भाषां न विद्मः तर्हि भारतस्य ज्ञानवैभवमपि ज्ञातुं न प्रभवामः। अतः भारते याः याः भाषाः विलसन्ति ताषां परिज्ञानं भारतीयनां कृते परममावश्यकम्।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः अष्टादशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभसम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम् अनुसन्धानपथि प्रवृत्तानामचार्याणामनुसन्धातॄणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयमानोऽहं निकषधिषणापूरित-विषय-वस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**प्रो. शिवशङ्करमिश्रः**
**शोधविभागाध्यक्षः**




# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग



## English Section

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# भारतीयसंस्कृतेः सातत्यपूर्णपरम्परायाः संवाहकं पुराणसाहित्यम्

–प्रो. रमेशभारद्वाजः *

परमसौभाग्यमिदमस्माकं यत् अनेकाभ्यः सहस्राब्दीभ्यः भारतभूमौ ज्ञानस्य विज्ञानस्य च अक्षुण्णधारा प्रवहति। न तत्र कोऽप्यवरोधः, न तत्र कुत्रापि कस्मिन् अपि कालखण्डे विखण्डावकाशः। साम्प्रतं पुरातत्त्वशास्त्रस्य प्रमाणैः सुनिश्चीयते यत् विगतदशसहस्रवर्षेभ्यः भारतीया वैदिकी संस्कृतिः निरन्तर-प्रवाहवती मानवमात्रस्य लौकिकं पारलौकिकं च सर्वविधं कल्याणं विदधाति। वैदिकसंस्कृतिरियमत्रैव भारतभूभागे समुत्पन्ना संवर्धिता च। अनादिकालतः संसारस्य विषीदतां जनानामुद्धरणाय अस्माकं पूर्वजैः वैदिकं, पौराणिकं बौद्धं च दर्शनमवलम्ब्य निखिले अपि जगति संस्कृतिरियं विस्तारिता। तथ्यमिदमवधेयमत्र यदस्माकं दृष्ट्यां संस्कृतं न केवलं भाषा अपितु भारतवर्षस्य आत्मतत्त्वात्मिका। अनादिकालतः भाषेयं ज्ञान-विज्ञानात्मक-भारतीयचिन्तनस्य संवाहिका। यथा चैतन्यरूपमात्मतत्त्वं पूर्वपूर्वजन्मकृतकर्मणामपूर्वरूपफलानि संस्काररूपेण उत्तरोत्तरजन्मसु प्रस्तौति प्रतिफलति, तथैव संस्कृतम्। अत एवोच्यते तत्त्वदर्शिभिः– **'संस्कृतिः संस्कृताश्रिता'** इति।

मानवजातेः प्राक्तनतमाः ग्रन्थाः वेदा इति सर्वैरभिस्वीक्रियते। मन्त्रब्राह्मणात्मकं वेदसाहित्यं हि भारतीयसमाजस्य मूलाधायकमत एव वयं वैदिकसनातनधर्मपालनतत्पराः इति डिण्डिमघोषेण गौरवमनुभवामः।

जीवमात्रं निरतिशयसुखमेव कामयते। तदुपलब्धिस्तु अपौरुषेयवेदबोधितोपायैः संभवति। वेद-वाक्यानि हि अनिष्टपरिहारपूर्वकं इष्टप्राप्त्यर्थमुपायं दर्शयन्ति, अत एवोक्तं वेदभाष्यकारेण

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**[1]

---

* अध्यक्षः, संस्कृतविभागः, दिल्लीविश्वविद्यालयः, दिल्ली।

1. सायणभाष्य, ऐ.ब्रा.

भारतीयचिन्तनस्य उद्‌गमरूपवेदस्य यथार्थज्ञानाय वेदाङ्ग-स्मृतिसदृशग्रन्थराशि: प्रणीतो- महर्षिभि:। तस्यामेव परम्परायाम् इतिहास-पुराणानां विशिष्टस्थानम् अर्थात् वेदानां परिशीलनात्मकविकासयात्रायामस्मदीयायां रामायण-महाभारतात्मकेतिहासस्य पुराणानां च महत्त्वं वरीवर्ति। अत एवोच्यते महाभारते-

**'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्'**[1] इति।

अर्थात् वेदानां यथार्थज्ञानं रामायण-महाभारत-पुराणमाध्यमेनैव संभवति। अनादिकालत: हि वेदा सृष्ट्युपकारि-मानव जीवनयापनस्य पथिप्रदर्शका: सन्ति। तत्र वर्णिता अर्था: दिव्यायां वेद-वाचि निगूढा वर्तन्ते। अत: तेषां सार्वभौम-अर्थानां सुकरतया ज्ञानाय वाल्मीकि-व्यासप्रभृतय: त्रिकालदर्शिन: ऋषय: इतिहाससाहित्यं (रामायणं महाभारतञ्च) पुराणसाहित्यं च रचितवन्त:। यदा यदा कालखण्डे यावन्तोऽपि आध्यात्मिक-धार्मिक-आर्थिक-सामाजिक-राजनैतिकादय: विषया: विवादग्रस्ता: जाता: तेषां सर्वेषां वैदिकनयेन समाधानं प्रस्तुतमितिहासपुराणाभ्याम्। इदमेवास्ति इतिहासपुराणयो: वेदमूलत्वं वेदपरिपोषितत्वञ्च। भारतीयगणतन्त्रस्य कृते पुराणानां महत्त्वं विविधदृष्टिभि: कीदृशं तस्य सर्वस्य प्रतिपादनमुपपादितं विविधावसरेषु विद्वद्भि:।

मया तु केचन विषया: चिता अत्र विचारार्थम्। सर्वप्रथमम् भारतीयसांस्कृतिक-इतिहासस्य युक्तिपूर्विकायां स्थापनायां पुराणानामुपयोग: कथं भवितुमर्हति। द्वितीयं महाभारतवत् रामायणस्यापि इतिहासत्वप्रस्थापनं नान्तरीयकम्। तदनन्तरं च पुराण-साहित्यपर्यालोचनविषये पाश्चात्त्यविदुषां योगदानस्य समीक्षणम्।

अस्माकं राष्ट्रवादिनां मतानुसारं भारतीयसाहित्यस्य अन्तरङ्‌गसन्दर्भा: प्रतिपादयन्ति यद् अनादिकालत: अद्यपर्यन्तं भारतभूमौ वैदिकसमाजस्य सातत्यमयी यात्रा प्रचलति। आधुनिक-युगे उद्‌घाटितानां पुरातत्त्वतथ्यानां शिलालेखप्रमाणानां च साक्षित्वं तन्मतं परिपोषयति। अन्यानि च विज्ञानसम्मतशास्त्रनिर्गततथ्यान्यपि तदेव भारतीयमतमनुमोदयन्ति। परन्तु अद्यापि पाश्चात्त्यै: सृष्टाया: मायाया: पाशै: प्रबद्धा: परतन्त्रा: भारतीय-अकादमिकधुरीणा: औपनिवेशिकनयेन राष्ट्रे प्राचीनभारतीयेतिहासपाठं पाठयितुं संभूय प्रवर्तन्ते। तत्कृते ते कल्पयन्ति आर्य-आक्रमणसिद्धान्त:, सिन्धुसभ्यताया: वैदिकधर्मविरुद्धत्वम्, ब्रिटिशशासनपूर्वं नात्र राष्ट्रत्वं राजनैतिकरूपेण, हिन्दूसमाजोऽयं विज्ञानस्पर्शरहित: तकनीकिज्ञानशून्यश्च; अनादिकालत: वैदेशिकानामाक्रान्तॄणां भोगास्पदत्वम् अस्या: भूमे:; हिन्दूधर्म: कण्टकावकीर्ण:-यत्र धर्मशास्त्रं वर्णव्यवस्थया जाति-आग्रहेण वा भेदभावपूर्णव्यवहारं शिक्षयति; स्त्रीणां दासत्वं शूद्राणाममानुषत्वं च बाहुल्येन घोषयति। भारतीयदर्शनं पाश्चात्यदृष्ट्या दर्शनपदमारोढुं न समर्थम् यतो हि तत्र दर्शनविषयेषु धर्मगततथ्यानामनायासप्रवेश इति।

विगतेभ्य: अष्टशताधिकवर्षेभ्य: एव ये सभ्या: जाता: ते यूरोपीया: यूरोपैककेन्द्रितपद्धत्या

---

1. म.भा. आदिपर्व 1/267

भारतीयविषयान् आलोडयितुं प्रयत्नरताः। अस्माकं च तथाकथिततया उच्चस्तरीयाः उपनिवेशवादस्य दासतुल्याः भारतीय-अकादमिकजगतः प्रगतिशीलाः नेतारः तथैव राष्ट्रध्वंसे कटिबद्धाः दृश्यन्ते।

उपर्युक्त-वादविखण्डने राष्ट्रीयदृष्टिसम्पन्नविद्वद्भिः पर्याप्ताः शोधप्रबन्धाः प्रणीताः परं ते हिन्दूवादिनः फासिस्टाः इति उद्घुष्यन्ते। यद्यपि तेषु डा. सम्पूर्णानन्दसदृशाः समाजवादिनः अपि आसन् परं तेषां स्वराः न श्रुताः। संहितासु येषां ज्ञान-विज्ञानात्मकतथ्यानां सूक्ष्मतया दिग्दर्शनं दरीदृश्यते तेषां विस्तरशः वर्णनं विलसति भारतीयसंस्कृतेर्विश्वकोषात्मके इतिहास-पुराणसाहित्ये। धातुविज्ञान-मूर्तिशिल्प वास्तुशास्त्र-भूगोल-धनुर्वेद-आयुर्वेद-परमाणुविज्ञान-रत्नपरीक्षण-पशु-पक्षिविज्ञानादीनि यानि शास्त्राणि- कालक्रमेण मूलतः नष्टानि इव, पूर्णतो नोपलब्धानि वा तेषां पुनः संरचनार्थं प्रभूतं साहित्यं पुराणेषु समुपलब्धमस्ति।

पुराणानि हि भारतस्य सर्वविध-इतिहासस्य पुनः संघटनार्थमपरिहार्याणि। पुराणसाहित्ये समुपलब्धराजवंशानां क्रममाधारीकृत्य पर्जीटरमहोदयेन भारतीय-राजनैतिक-इतिहासः प्रस्तुतः। भारतीयपरम्परादृष्ट्या, विशेषतः ग्रन्थेषूपलब्धानां खगोलविज्ञानविषयकतथ्यानामालोके संस्कृतसाहित्यस्य कालनिर्धारणं विधातव्यम्। आधुनिकपद्धत्या पुराणानां समालोचनात्मक- संस्करणानि तेषां पाठाः वा निर्धारयितव्याः। यत्र तत्र विकीर्णानि विविधज्ञान-विज्ञान-क्षेत्रविशेषानुसारिशास्त्राणि, तानि संकलनीयानि, तैनेव विगतसहस्राब्देषु मानवजातिकृते भारतीययोगदानेन ते परिचिताः भवितुमर्हन्ति।

यूरोपस्य पूर्वभागे क्रोएशियेति देशः। तत्र स्थितः जगरेब विश्वविद्यालयः डुबरोवनिकनगरे विंशतिवर्षेभ्यः द्वित्रवर्षान्तराले अन्ताराष्ट्रियसम्मेलनमायोजयति। तस्य विषयः वर्तते 'संस्कृतमहाकाव्यानि पुराणानि च' (Dubrounik International Conference of Sanskrit Epics and Purāṇas)। गतवर्षे आयोजितेऽष्टमे सम्मेलने आहूतोऽहं आडिटररूपेण। तत्रैकेन आस्ट्रिलियादेशस्थविदुषा सूचितम् यदस्य सम्मेलनस्य संज्ञा भवेत् 'इतिहासः पुराणानि च। तर्हि अन्यैः विद्वभिः विप्रतिपत्तिः प्रस्तुता एपिककथनेन रामायण-महाभारतयोः उभयोः प्रवेशः, इतिहासकथनेन च रामायण मुपेक्षितं स्यात्। तैः प्रमाणरूपेण पुराणवचनमुद्धृतम्- **'इतिहासो भारतं च वाल्मीकं काव्यमेव च'**[1]

परन्तु भारतीयदृष्ट्या मर्यादापुरुषोत्तमः रामः ऐतिहासिकः। अतः अस्माभिः तन्मतमुपेक्ष्य राजशेखरवचनम् आदरणीयम्-

**परक्रिया पुराकल्प इतिहासगतिर्द्विधा।**
**स्यादेकनायका पूर्वा द्वितीया बहुनायका।।**[2]

---

1. 131-32, ब्रह्मवैवर्तपुराणम्।
2. पृ. 8, द्वितीय अध्यायः, काव्यमीमांसा (बिहारराष्ट्रभाषा-परिषद्, 2000)

अर्थात् एकनायकपरं वाल्मीकीयं रामायणं बहुनायकचरित्रचित्रणपरं च महाभारतम् उभावपि ग्रन्थौ शास्त्रीयमर्यादया 'इतिहास' (इति ह आस) इति संज्ञया अभिधीयेते। अतः भारतीय-अकादमिक-जगति पाश्चात्त्यपद्धत्या रामायण-महाभारतयोः संज्ञा महाकाव्यमिति न प्रचारणीया। एतौ स्तः अस्माकम् इतिहासग्रन्थौ।

अष्टादश्यां शताब्द्यां सर विलियम जोन्स-फ्रांसिस बिलफोर्ड-सदृशविद्वभिः प्राचीनभारतीयभूगोलस्य देवशास्त्र (मिथकशास्त्रस्य) च ज्ञानार्थम् पुराणसाहित्य-मवलोकितम्।

एकोनविंशतितमशताब्द्याः मध्ये **एच. एच. विल्सनमहोदयेन** विष्णुपुराणस्य विस्तृतभूमिकाभूषितः आङ्गलभाषामयोऽनुवादः प्रकाशितः। परन्तु तन्मते इतिहासस्य स्रोतोरूपेण पुराणानां महत्त्वं नासीत्। तथैवाभिमतं कीथ-मैक्डोनलयोः। विल्सनमहोदयस्य समकालीनः कर्नल Once Kanedy मनुते यत् वैदिक-साहित्यवत् पुराणानि अपि हिन्दूधर्मस्य प्रामाणिकाः ग्रन्थाः। विंशति-शताब्द्याः प्रारम्भे पर्जिटरमहोदयेन पुराणसाहित्यस्य समालोचनात्मक-अध्ययनपूर्वकं ग्रन्थद्वयं रचितम्। 'Ancient Indian Historical Tradition' इति 'The Purāṇa Texts of the Dynasties of the Kali Age' इति च। तयोः ग्रन्थयोः माध्यमेन प्राचीनभारतीयेतिहासस्य पुनःसंघटना तेन व्यवस्थिता। डॉ. ए.डी. पुसलकरमहोदयेन पुराणेषूपलब्ध-वंशावलीनामध्ययनान्तरं प्रतिष्ठापितं यत् पुराणेषु प्राप्तानामेतिहासिकसन्दर्भाः न कपोलकल्पिताः अपितु भारतीयेतिहासस्य सातत्यपूर्णपरम्परायाः परिचायकाः।

**Cambridge History of India ग्रन्थस्य लेखकः E.J. Rapson** महोदयोऽपिप्राचीन-भारतइतिहासस्य पुरस्करणे पुराणसन्दर्भाणामुपयोगं कृतवान्। किर्फेलनामकः जर्मन् विद्वान् Das Purāṇapanchlakṣana नामके ग्रन्थे पुराणसाहित्यस्य गहनसंशोधनं प्रस्तुतवान्। 'मेयेर' (Meyer, Johann, J.) महोदयोऽपि GESETZVUCH UND PURANA (Leipzig) ग्रन्थे धर्मशास्त्रीयतथ्यानां पुराणैः सह अन्तःशास्त्रीयसम्बन्धं प्रस्तुतवान्।

भारतवर्षेऽपिअनेक-विद्वांसःपुराणसाहित्यमाश्रित्य कालनिर्धारण-राजनीतिक-इतिहास-सामाजिक-सांस्कृतिक-इतिहास-देवशास्त्र (मिथकशास्त्र)-हिन्दू-धार्मिककृत्य- सम्बन्धिनः अनेकान् ग्रन्थान् व्यरचयन्।

कस्यापि समाजस्य सामाजिकं सांस्कृतिकं च जीवनं यावत् सम्यक् न विविच्येत तावत् तस्य इतिहासः राजवंशचित्रणमात्रेण पूर्णतां गन्तुं नार्हति।

यदा अस्माभिः स्वीक्रियते यत् पुराणानि अस्माकं प्राचीन-इतिहासस्य स्रोतोरूपाणि तदा 'वासुदेवशरण-अग्रवाल' सदृशैः विद्वद्भिः प्रणीताः शोधग्रन्थाः (Matsya Purāṇa – A Study, Vāmana Purāṇa – A Study; **मार्कण्डेयपुराण–एक सांस्कृतिक अध्ययन**) अस्माकं कृते आदर्शभूताः। यतो हि तत्र पुराणसाहित्यमाश्रित्य भारतीयसांस्कृतिक-इतिहासः प्राप्यते।

इतिहासलेखनदृष्ट्या पुरातात्विकतथ्यानां प्रामाण्ययसन्दिग्धमिति मन्यन्ते इतिहासकाराः। अस्मिन् सन्दर्भे **ए.बी.एल. अवस्थीमहोदयः ( A Study in the Skanda Purāṇa, Part I )** स्पष्टरूपेणोद्घोषयति– उत्तरभारतस्य पल्लव-कोल-पांडियराजवंशानामितिहा सविषये स्कन्दपुराणं महत्त्वपूर्णस्रोतोरूपेण विराजते। महाभारतयुद्धस्य अनन्तरम् स्थितानां राजवंशानामितिहासः पुराणसाहित्ये सम्यक्रूपेण संरक्षितः। विगतदशकेषु सम्पन्नेभ्यः पुरातात्विक-उत्खननेभ्यः विविधा मुद्रादिसामग्री प्राप्ता। तस्याः स्कन्दपुराणादि-स्थसन्दर्भैः सह तुलनात्मकमध्ययनेन ज्ञायते यत् पुराणेषु प्राप्तम् विवरणमेतिहासिकदृष्ट्या प्रामाणिकम्।

पुराणसाहित्यम् अधिकृत्य पाश्चात्यविद्वद्भिः ये शोधपूर्णाः विचाराः पुरस्कृताः तेषां समीक्षा मया प्रस्तूयते–

पाश्चात्त्यैः आचार्यैः पुराणस्य पञ्चलक्षणानि लक्ष्यीकृत्य पर्याप्तः विचारः कृतः। पञ्चलक्षणविषये विल्सनस्य मतमिदमासीत् यत् पञ्चलक्षणस्य मर्यादा विष्णुपुराणे सर्वथा परिपालिता। Wevler महोदयः विष्णुपुराणस्य वैचारिकसंरचनामालोड्य पूर्वमतं खण्डयति।

पाश्चात्त्य-विदुषां शोधपद्धतौ भाषाशास्त्रस्य (Philology) प्रामुख्यम्। 'Horst Brinkhaus' महोदयेन प्रथमडुब्रोवनिकसम्मेलने गदितं यत् पौराणिक-साहित्ये त्रिमूर्तिसिद्धान्तस्य सर्वप्रथमः सन्दर्भः विष्णुपुराणे प्राप्यते। 'Peter Schreiner' महाशयेन तस्य समीक्षा कालान्तरे प्रस्तुता।

विंशशतके पाश्चात्यविद्वद्भिः रेखांकितं यत् रामायण-महाभारतयोरपेक्षा पुराणसाहित्यस्य अध्ययनम् खण्डेषु परिसीमितदृष्ट्या क्रियते, यत्र सर्वाङ्ग-पूर्णशोधदृष्टेरभावो वर्तते। 'The Purāṇas are still being studied in bits and pieces with very little evidence of a totalistic perspective. Alone the text-critical method, which focuses on the compositional process of individual Purāṇic topics and schemes of text organization (as in the pañcalakṣaṇa, as opposed to entire texts, could be described as a coherent testable methodology in its own terms. One of the problems that continues to bedevil Purāṇic studies even more than epic studies is the very condition of the sources themselves. It is not just that critical editions of the kind that exist for the Mahābhārata and the Rāmāyaṇa exist only for a few Purāṇas, it is rather that the kind of fundamental questions of lower criticism that have been completed for the two epics have scarcely been framed for the Purāṇas.'[1] समालोचनात्मकसंस्करणानि

1. Greg Bailey– Introductory remarks on future Research on the Sanskrit Epic and Purāṇas, p. 11 (Proceeding of the First Dubrovnik International Conference on the Sanskrit Epic and Purāṇas, 1997 Croatia)

अपि अत्र सीमितरूपेण कृतानि। Kirfel महोदयः तस्य अनुयायिनश्च पुराणानां संरचनात्मकविश्लेषणम् आश्रित्य पाठस्य ऐतिहासिक-सन्दर्भान् (textual-historical approach) अन्विष्यन्ति। समालोचनात्मकसंस्करणद्वारा पाठनिर्धारणमतीव कठिनम् अतएव स्कन्दपुराणस्य सम्पादनविषये Hans Bakker गदति यत् पुराणग्रन्थसम्पादनं विवादग्रस्तं तथापि करणीयं कार्यम्।[1]

विगतपञ्चदशवर्षेभ्यः पुराणसाहित्यमाश्रित्य पाश्चात्यविद्वद्भिः ये शोधाः कृता ते इत्थं सन्ति। (1) पुराणेषु वर्णितः त्रिमूर्तिसिद्धान्तस्य विकासः Horst Brinkhaus – Cyclical determinism and the development of the trimūrti-doctrine) (2) संस्कृतसाहित्ये उपेक्षितः शोधविषयः वर्तते अन्तःपाठसमीक्षा विशेषतः पुराणेषु। अतः ग्रेग बैली महोदयः संस्कृतज्ञानं तत्र नियोक्तुम् इच्छति (Greg Bailey–Intertextuality in the Purāṇas : a Neglected element in the study of Sanskrit Literature) (3) हिन्दूधार्मिककृत्यान् अधिकृत्य अपि अनेके शोधाः प्रस्तुताः Petteri Koskikallio–The horse sacrifice in the Pātālakhaṇḍa of the Padmapurāṇa। पुराणानाम् पाठीय-संरचनाक्रमम् आश्रित्य अपि अनेके शोधनिबन्धाः प्रणीता। (1. Horst Brinkhaus–The Division into Parvans and the Bhaviṣyaparvan of the Harivaṃśa; 2. Greg Baily–Temporal Schemes in the Vāmanapurāṇa; 3. Klara Gönc Moacinin–Nāṭyaśastra as a (diṣtorting?) mirror to the epic/ Purāṇic mythic image : the question of its dating; 4. Peter Schreiner–Five topics, three functions one god : on the interrelatedness of Purāṇapañcalakṣaṇa–material and trimūrti concept in the Viṣṇupurāṇa; 5. Freda Matchett : Some Reflections on the Frame–Narrative of the Bhāgavatapurāṇa; 6. Christophe Vielle–An Introduction to the Jaiminīyasaṃhitā of the Brahmaṇḍapurāṇa; 7. Annemarie Mertens–What defines a stage? The Purāṇic myth of Satī's death in transition; 8. Renate Söhnen–Thieme–Mapping the Bhāgavatapurāṇa : Framework, dialogue structures, Time Concepts and other Narative Strategies; 9. Mccomas Taylor–Textual Strategies, Empowerment and "True" Discourse in the Bhāgavatapurāṇa.

पुराणानां मूलभाषाविषये पर्जीटरमहोदयः स्थापयति यत् मत्स्य-वायु-ब्रह्माण्डपुराणानि मूलतः प्राकृतभाषायां विरचितानि कालान्तरे च संस्कृतभाषायामनूदिताः। तत्र हि संकेतानि

1. Hans Bakker, 'Some methodological considerations', 331-33; Rob Adriaensen, Hans T. Bakker, and Harunaga Isaacson, 'Towards a Critical edition of the Skandapurāṇa' 328-29

यथा प्रथमतः संस्कृतश्लोकानि संस्कृतछन्दसामनुसारानि न वर्तन्ते अपितु प्राकृतभाषायाः छन्दसामनुसाराणि। द्वितीयः संस्कृतछन्दसां पूर्त्यर्थं प्राकृतशब्दानामुपयोगः। तृतीयसंकेतः वाक्यरचनार्थं प्रयुक्ताः संस्कृतशब्दाः न समीचिनाः अपितु प्राकृतशब्दानामनुप्रयोगाः औचित्यं विभर्ति। अन्ततश्च व्याकरणगतसन्धिनामनियमितता एतैरन्तरङ्गप्रमाणानि सूचयन्ति यत् पुराणानि प्राकृतभाषायां मूलतः लिखितानि। There are clear indications that the Sanskrit account as it exists in the Matsya, Vāyu, and Brahmāṇḍa was originally in Prakrit, or, more accurately, that it is a Sanskritized version of older Prakrit ślokas. The indications are these: first, certain passages as they stand now in Sanskrit violate the śloka metre, whereas in Prakrit form they would comply with the metre; secondly, certain Prakrit words actually occur, especially where they are required by the metre, which the corresponding Sanskrit forms would violate; thirdly, Sanskrit words occur at times in defiance of syntax, whereas the corresponding Prakrit forms would make the construction correct; fourthly, mistaken Sanskritzations of names; fifthly, the copious use of expletive particles; and sixthly, irregular sandhi.[1]

विष्णु-भागवतपुराणयोः सन्दर्भे तस्य कथनं वर्तते यत् तयोः मुख्यपाठे संस्कृतभाषाया मौलिकरूपं संरक्षितमस्ति। गरुडपुराणविषये तस्याभिमतं विद्यते यदस्य पुराणस्य रचना मूलतः संस्कृतेनाभवत्। It also good for such portions of the Viṣṇu and Bhāgavata as have preserved the old verses; but the main portions of these two Purāṇas are condensed redactions composed directly in Sanskrit apparently. The Garuḍa version is a more concise condensation composed directly in Sanskrit apparently.[2]

अत्र निवेद्यते-पाश्चात्यविदुषामेतादृशमभिमतं तदैवोपपद्यते यदा ते भारतीयभाषणामेतिह्यविषये भारतीयदृष्ट्या न विचारयन्ति। भारतीयपरम्परानुसारं सर्वप्रथमा वैदिकभाषातदनन्तरंसंस्कृत-प्राकृतभाषयोःस्थितिः।अत्रपर्जीटरसदृशविदुषांविप्रतिपत्तिखण्डनार्थं भारतीयपरम्परापुरस्सरपूर्वकं स्थापनञ्च भविष्यत्काले विचारयिष्यामः।

अत्र अन्तिमः विषयः सर्वेषां विदुषां विचाराय उपस्थाप्यते 'किम् पुराणानि ब्राह्मणवादस्य स्थापनार्थम् रचितानि? त्र्यधिकनवत्युत्तर-एकोनविंशतितमे वर्षे (1993) **Wendy Doninger द्वारा सम्पादिते Purāṇa perenis** इत्याख्ये ग्रन्थे नारायणराव Velchera महोदयेन एकः निबन्धः लिखितः Purāṇa as Brahmanic ideology

1. p.x, The Purāṇa Text of the Dynasties of the Kali Age
2. p. xi तत्रैव

तस्य अनुकर्तृभिः प्रचारितम् यत् पुराणसाहित्यम ब्राह्मणवादस्य परिपोषकम्। किम् एतत् सत्यम्? यतो हि वयं सर्वे शास्त्रमर्यादया जानीमः यत् समाजस्य ये वर्गाः श्रुतिसाहित्यम् आश्रित्य स्वजीवनोत्कर्षं प्राप्तुमसमर्थाः, विशेषतः स्त्रियः अल्पज्ञाः अल्पशिक्षिताः अन्ये च तादृशाः उपेक्षितवर्गाः तेषां कल्याणाय ऋषिभिः पुराणसाहित्यं सृष्टम्। यथा पूर्वं प्रतिपादितं यत् पुराणानाम् प्रमुखं प्रयोजनम् वर्तते वेदविहितानां तत्त्वानां जनसाधारणेषु प्रचारः अर्थात् वैदिकधर्मस्य लोकप्रियः विस्तारः पुराणेषु एव प्राप्यते। भारतीयसंस्कृतौ मानवजन्मनः प्रधानं लक्ष्यं परमपुरुषार्थरूपो मोक्षः, भगवत्प्राप्ति-अपरपर्यायः तदेव साध्यते पुराणैः। भारतीयचिन्तनं मानवजीवनस्य सर्वाङ्गपूर्णविकास प्रदिशति। भारतीयचिन्तनस्य मर्म इदमपि प्रतिभाति एतादृशः मानवमात्रस्य परमोत्कर्षः (न कस्यापि वर्गविशेषस्य) पुराणैरेव सुगमतया अवाप्तुं शक्यः। एतेनैव स्वयं पुराणसाहित्यमेव पुराणमहिमानं मुहुर्मुहुः गायति। यथोक्तं नारदीयपुराणे—

**वेदार्थादधिकं मन्ये पुराणार्थं वरानने।**
**वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः॥[1]**

यथा चोक्तं स्कन्दे—

**यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल।**
**उभाभ्यां यन्न दृष्टं हि तत् पुराणेषु गीयते॥[2]**

## संदर्भ-ग्रन्थ-सूची


1. Aitareya Bràhmana (ed.) R. Anantakrsna Sàstri, Trivandrum, 1942
2. Mahabharata Vol 1, M.N. Dutt, Elysium Press, Calcutta, 1895
3. Vishnu Purana (trans.) H.H. Wilson, Evinity Publishing Ine, 2009
4. काव्यमीमांसा, बिहारराष्ट्रभाषा-परिषद्, 2000
5. ब्रह्मवैवर्तपुराणम्, गीताप्रेस, गोरखपुरम्, 2017
6. नारदीयपुराणम् गीताप्रेस, गोरखपुरम्, 1954
7. स्कन्दपुराणम् (सम्पा.) वेदमूर्ति-तपोनिष्ठ-श्रीराम-शर्मा-आचार्यः, संस्कृति-संस्थानम्, बरेली, 1970
8. Adriaensen, Rob., Hans T. Bakker, and Harunaga Isaacson. 'Towards a Critical Edition of the Skandapurāṇa.' IIJ 37 (1994): 324-31.
9. Agarwal, Vasudev Sharan – Matsya-Purāṇa–a study, All India Kashiraj Trust, Varanasi, 1963
10. Agarwal, Vasudev Sharan – Vāmana Purāṇa, a study, Prithvi Prakashan, Kashi, 1983


1. 1/14/17
2. स्कन्दपुराणे, रेवाखण्डे, 1-23

11. Andrijanic, Ivan – On the Growth Sellmer, Svan (ed.) and Composition of the Sanskrit Epics and Purāṇas, Croatica Mdccclxi academia Scientiarum et atrium, Zagreb, 2016

12. Awasthi, A.B.L. – Studies in Skanda Purāṇa, Kailash Prakashan, Lucknow, 1983

13. Bakker, Hans T. 'Some methodological considerations with respect to the Critical Edition of Puranic literature', in XXIII. Deutscher Orientalistentag: ausgewählte Vorträge, ed. Einar von Schuler, 329-42. Stuttgart: Steiner, 1989.

14. Brinkhaus, Horst – Cylical Determinism and the development of the trimùrti-doctrine (Article) Pg. 35 in Composing a tradition; Concepts, Techniques and Relationships by Peter Schreiner, Zagreb, 1999

15. Brockington, Mary (ed.) – Stages and transitions: Temporal and Historical Frameworks in Epic and Purāṇic Literature, Croatica Mdccclxi Academia Scientiarum At Atrium, Zagreb, 2002

16. Koskikallio, Petteri (ed.) – Epics, Khilas, and Puràças; Continuities and Ruptures, Croatica Mdccclxi Academia Scientiarum Et Artium Croatica, Zagreb; 2005

17. Koskikallio, Petteri (ed.) – Parallels and Comparisons, Croatica Mdccclxi Academia Scientiarum Et Artium, Croatica, Zagreb, 2009

18. Meyer, Johann, J. – Cresetzvuch und Purana, Leipzig

19. Narayana Rao, Velcheru – Puràça as Brahminic Ideology, in Puràça Perennis: Reciprocity and transformation in Hindu and Jain texts, ed. Wendy Doniger, 85-100, Suhy Press: Albany, 1993

20. Pargiter, F.E. – Ancient Indian Historical Tradition, Oxford University Press, London, 1922

21. Pargiter, F.E. – The Purāṇa text of the Dynasites of the Kali Age, Chowkhamba Sanskrit Series, Varanasi, 1962

22. Pusalker, A.D. – Studies in the Epics and Puràças, Hindustan Cellulose and Paper, Bombay, 1955

23. Rapson,E.J.(ed.)–TheCambridgeHistoryofIndia,UniversityPress,Cambrige,1935

24. अग्रवालः, वासुदेव-शरणः – मार्कण्डेय-पुराण – एक सांस्कृतिक अध्ययन, हिन्दुस्तानी अकादमी, इलाहाबाद, 2010

UGC- CARE Listed
**अक्टूबर-दिसम्बर, 2020**

**शोधप्रभा**
वर्ष : 45, चतुर्थोऽङ्कः

# निपातार्थसमीक्षणम्

**डॉ. अशोककुमारमिश्रः***

प्रस्तुतशोधपत्रे "प्रादयो द्योतकाः चादयस्तु वाचकाः" इति न्यायशास्त्रोक्तं मतमयुक्तमिति प्रतिपादयन् निपातानां द्योतकत्वमेवेति अनेकाभिः युक्तिभिः प्रतिपादितं विद्यते।

नैयायिकाः निपातविषये वैषम्यं प्रतिपादयन्ति तथाहि- प्रादयः द्योतकाः भवन्ति, चादयः वाचकाश्च भवन्ति, द्योतकत्वन्नाम-स्वसमभिव्याहृतपदनिष्ठवृत्ति-उद्‌बोधकत्वम् किन्तु एतस्मिन् वैषम्ये किमपि बीजं नास्तीति, तस्मात् बीजाभावात् निपातानां द्योतकत्वमेव, तद्धि-

**द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।**
**उपास्येते हरिहरौ लकारो दृश्यते यथा ॥[1]**

अर्थात् येन हेतुना प्रादयो द्योतकाः तथैव तेन हेतुना निपाताः द्योतकाः भवन्ति, एतस्येदं तात्पर्य यत् ईश्वरमनुभवति इत्यादिषु यथा अनुभवरूपोऽर्थः धात्वर्थः नास्ति, सति धात्वर्थे घटो भवति इत्यत्रापि प्रतीतिः स्यात् एवञ्च स अनुभवरूपोऽर्थः उपसर्गस्य नास्तीति चेत् उपसर्गस्यार्थः स्वीक्रियते तदा प्रकृत्यर्थत्वात् आख्यातार्थानन्वयापत्तेः प्रत्ययानां प्रकृत्यार्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः अनुगच्छति इत्यत्र अनुभवादिप्रत्यया पत्तेश्च। प्रकृते आशङ्का उदेति यत् उपसर्गेण अनुभवादिबोधे तत्तद्धातोः समभिव्याहारस्य कारणता स्वीक्रियते इति वाच्यम्, तन्न सत्तादौ शक्तत्वेन प्रसिद्धस्य धातोः एव अनुभवार्थकत्वमुपसर्गस्य द्योतकत्वमित्यस्यापि वक्तुं शक्यत्वात्। अथ च साम्प्रतम् तृतीयो पन्थाः अवतरति 'न च विशिष्टार्थः गौरवात् अर्थात् अनुभवादिरूपोऽर्थः न धातोः न चोपसर्गस्य अपितु समुदायार्थी भवति, किन्तु मतमिदं गौरवग्रस्तम्। तथाहि विशिष्टे शक्तिस्वीकारे विशिष्टानुपूर्वी शक्ततावती भवति। एवञ्च विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे विनिगमनाविरहात् अव्यवहितोत्तरत्वसम्बन्धेन अनुविशिष्टभूशब्दस्य अव्यवहितपूर्वत्वसम्बन्धेन भूशब्दविशिष्टस्यानोर्वा वाचकतायाः कल्पने गौरवादित्यर्थः।

---

* सहायकाचार्यः, एस.डी. आदर्शसंस्कृतमहाविद्यालयः, अम्बाला (हरियाणा)

1. वै. भू. सा.-का. 42

तथा विशिष्टार्थस्वीकारे तस्य प्रकृतित्वाभावेन प्रत्ययार्थान्वयानापत्तिरपि दोषो बोध्यः। तथा च धातोः उपसर्गस्य विशिष्टस्य च वाचकतास्वीकारे "धातोरेव विद्यमानत्वादि वाचकस्यास्तु लक्षणा, उपसर्गस्तात्पर्यग्राहक इत्यस्तु। तथा च तात्पर्य्यग्राहकत्वमेव द्योतकत्वमिति विद्यमानत्वादिना इत्यत्र आदिपदेन यागात् स्वर्गो भवति इत्यादिषु उत्पत्तेः संग्रहः। अर्थात् धातुः विद्यमानवाची अतः शक्यसम्बन्धरूपात्मिका लक्षणा प्रवर्तते, प्रादयः कस्यचित् अर्थस्य बोधकाः न भवन्ति अतः तेषां विषये शक्यसम्बन्धरूपा न संभवति।

"तच्च चादिष्वपि तुल्यम्। 'चैत्रमिव पश्यति' इत्यादौ सादृश्यविशिष्टां चैत्रपदलक्ष्यम् इवशब्दः तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। तत्र स्वयं युक्त्यन्तरमाह- 'उपास्येते हरिहरौ' इति- अत्र हि उपासना किमुपसर्गार्थः विशिष्टस्य, धातुमात्रस्य वा"।। अर्थात् उपसर्गानां तात्पर्यग्राहकत्वनिश्चयेऽपि द्योतकता तु नैव सिद्ध्यति, तत्र स्वयं समादधति कौण्डभट्टः यत् तथा अङ्गीकारे स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वात् धातोः उपासनारूपफलवाचकत्वा- भावादनापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयो गौरवात्। तृतीये त्वागतं द्योतकत्वम् तात्पर्यग्राहकत्वलाभात् इतिभावः। दृश्यते इत्यत्र कर्मणि इति शेषः।।

**तादृशं द्योतकत्वं तु चादिषु अपि तथैव वर्तते,**

तथा चाह-

**तथान्यत्र निपातेऽपि लकारः कर्मवाचकः।**
**विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः।।**[1]

कारिकायाम् अन्यत्र पदेन 'चादिरूपे निपाते समभिव्याहृते' इति ग्राह्यम् अर्थात् चादिनिपातानामपि द्योतकत्वमेवाङ्गीकर्तव्यमिति।

**तद्यथा**- 'साक्षात्क्रियते', 'अलङ्क्रियते', 'ऊरीक्रियते शिवः इत्यादिषु सर्वत्रापि धातोः तत्तदर्थे अर्थात् साक्षात्निपातपूर्वक-कृधातोः प्रत्यक्षनिष्ठप्रयोजकता-निरूपित-प्रयोज्यतावत् - विषयताशालि-इन्द्रियसन्निकर्षानुकूलव्यापारनिरूपितार्थे, अथ च 'अलङ्क्रियते इत्यत्र अलम्पूर्वक-कृधातोः शोभनानुकूलव्यापारविशेषनिरूपिते अर्थे एवञ्च ऊरीपूर्वककृधातोः स्वीकृत्य-अनुकूलव्यापारनिरूपिते अर्थे कर्मणि लकारसिद्ध्यर्थम् तस्य अर्थस्य वाचकत्वम् अवश्यमभ्युपेयम्, एतेषां द्योतकत्वम्। किञ्च यदि प्रादि-निपातानां वाचकत्वं स्वीकुर्मश्चेत् 'भूयान् प्रकर्षः, कीदृशो निश्चयः' इतिवत् 'भूयान् प्र' कीदृशो निः इत्यादिप्रयोगाः स्युः। तस्मात् द्योतकत्वमेव। द्योतकत्वस्वीकारे तु प्रादेः निरर्थकत्वात् तेषामन्वयो एव न जायते।

---

1. वै. भू. सा.-का. 43

इदानीम् प्रादीनां द्योतकत्वसाधनाय अपरमपि पक्षं प्रस्तौति-

**विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः।**

अर्थात् प्रादीनां वाचकत्वस्वीकारे 'शोभनः समुच्चयो द्रष्टव्यः। इतिवत् शोभनश्च द्रष्टव्यः इति प्रयोगस्यापत्तिः आगता। तस्मात् द्योतकत्वमेवोचितम्। अथ निपातानां वाचकत्वे प्रातिपदिकार्थयोः षष्ठ्यादिकं विना भेदेनान्वयासम्भवः वर्तते अर्थात् 'अभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थनिष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन शाब्दबोधं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितिः कारणम्' इति कार्यकारण-भावस्य आवश्यकतया धवश्च खदिरश्च इत्यत्र तदभावेन धवादेश्चार्थसमुच्चये-ऽन्वयासम्भवः। चेदुच्यते, प्रातिपदिकार्थयोः भेदान्वयबोधे विरूद्धविभक्तिजन्योपस्थितिः हेतुरिति कार्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह-

**पदार्थः सदृशान्वेति विभागेन कदापि न।**
**निपातेतरसंकोचे प्रमाणं किं विभावय॥**[1]

कारिकायां तु सदृशापदेन सदृशेनेति बोध्यम्, न तु वाचा, निशा इत्यादिवदाबन्तम्। समानाधिकरणेनेति यावत् अर्थात् स्ववाचकशब्दसमानाधिकरण-शब्दवाच्येनेत्यर्थः। अथवा स्वनिष्ठपदार्थतावच्छेदकसमानाधिकरणपदार्थतावच्छेद-काधिकरणेन, तादात्म्यसम्बन्धेन सम्बन्धिनो वा। अभेदेनेति शेषः। विभागेन = असदृशेन असमानाधिकरणेनेति यावत् अर्थात् स्वनिष्ठपदार्थतावच्छेदकसमानाधिकरणात्यन्ता-भावप्रतियोगिपदार्थतावच्छेदकाधिकरणेन कदाचिदपि अन्वयो न सम्भवति। एतस्येदं तात्पर्य यत् अभेदसम्बन्धेन प्रातिपदिकार्थ-प्रकारकबोधं प्रति विरुद्धविभक्ति-अनवरूद्धप्रातिपदिक-धात्वन्यतरजन्योपस्थितेः हेतुता अवश्यं वाच्या। एतस्मात् कारणादेव 'राज्ञः पुरुषः'- इत्यादिषु अभेदान्वयबोधो न। अत्र पुनः प्रश्नः जागर्ति यत् ''नामार्थयोः अभेदान्वयः' इति नियमे निपातातिरिक्तत्व-विशेषणदानेन दोषाभाव इति वाच्यम् तन्न, मानाभावः, चेदुच्यते 'कीदृशो निः' इत्यादिप्रयोगापत्तिरेव मानम्, अत आह गौरवञ्चेति। अस्मन्नये तु निपातानां द्योतकत्वादेव एव नास्तीति नायं दोषः। एतत् स्वीकारादेव 'घटो नास्ति' इत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः।

एवञ्च निपातानां वाचकत्वं स्वीकुर्मश्चेत् काव्यादिग्रन्थेष्वपि अन्वयो न स्यात्, तद्धि-

**शरैरूस्तैरिवोदीच्यानुद्धरिष्यन् रसानिव।**
**इत्यादावन्वयो न स्यात् सुपाञ्च श्रवणं ततः॥**

अत्र उस्रैः = किरणैः, अत्र = उदग्देशीयराजोद्धरणक्रियायाम्। उस्रसदृशैः शरै

1. वै. भू. सा.-का. 44

रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः। क्रमोऽयं तदा एव संगच्छते यदा उस्रादिशब्दानां तत्सदृशपरत्वे इव शब्दस्य द्योतकत्वं स्वीकुर्मः। अन्यथा सदृशे लक्षणाया अस्वीकारे प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः विरोधः स्यात्। तस्मात् द्योतकत्वमेव सिद्धान्तितम्।

पुनरत्र प्रश्नो जागर्ति यत् द्योतकत्ववादिमते 'अब्राह्मणः इत्यादिषु स्थलेषु तत्पुरुषसमासलक्षणस्य (उत्तरपदार्थप्रधानो तत्पुरुषः) अव्याप्त्यापत्तिः, यतोहि पूर्वपदस्य द्योतकत्वात् अनर्थकत्वेन उत्तरपदार्थस्य प्राधान्याभावः। किञ्च अर्थवत्त्वाभावात् प्रातिपदिकसंज्ञा ततो विभक्तिश्च न जायते, इति आशङ्क्याह कौण्डभट्टः-

**नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता।**
**द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः।।**[1]

अर्थात् नञ्समासादिस्थलेषु योत्तरपदार्थप्राधान्यं सा द्योत्यर्थमादायैव। अस्येदं तात्पर्यं यत् "इतरपदार्थनिष्ठप्रकारतानिरूपित-विशेष्यताशालिबोधजनकत्वमुत्तरपदार्थ-प्रधानत्वम्।" तत्रेतरपदार्थपदेन वाच्य-लक्ष्य-द्योत्यात्मकः त्रिप्रकारकोऽपि अर्थः ग्रहीतो भवति। अतः द्योत्यमर्थमादायैव प्रातिपदिकसंज्ञा स्वादि-उत्पत्तिश्च जायते। अर्थात् द्योतकता तु व्यञ्जनारूपैव वृत्त्याऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्य द्योतकेऽपि सत्त्वात् प्रातिपदिकत्वमक्षतमिति। तुष्यतु दुर्जनन्यायेन स्वीकारेऽपि समाधानं वदति ग्रन्थकारः वस्तुतः "अव्ययादाप्सुपः"[2] इति ज्ञापकात् सुबुत्पत्तिः।" अर्थात् तेषां निरर्थकत्वात् प्रातिपदिकसंज्ञायाः अभावे स्वादयः नोत्पद्येरन्, अतः लुग्विधानं व्यर्थ सत् ज्ञपयति सुबुत्पत्तिम्। अथवा "निपातस्यानर्थकस्य" इति वार्तिकेन प्रातिपदिकसंज्ञा विधीयते। कृत्तद्धितसमासाश्च[3] इत्यत्रानुक्तसमुच्चयार्थचकारेण निपातानां संग्रहो बोध्यो भवति। अतः द्योतकत्वं निपातानां सुतरां सिद्धमेव। एतेषां द्योतकत्वकल्पे मीमांसकसम्मतिमपि प्रतिपादियति-

**चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।**
**क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः।।**
**तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।**
**यदर्थद्योतकौ तौ तु वाचकः सविचार्य्यते।।**
**उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते।**
**प्रहाराहारसंहारविहारपरिहारवत् ।।**

अत्र अन्तिमकारिकायाम् उपसर्गपदं निपातोपलक्षणम्। तथैव कारिकायां धात्वर्थः इत्यत्रोपात्तं धातुपदम् पदान्तरस्य बोधकं भवति। अत्र अन्वयव्यतिरेकाभ्याम् निपातानां

---

1 वै. भू. सा.-का. 46

2. पा. सूत्रम् 1-2-26

3. पा. सूत्रम् 1-2-82

वाचकत्वं साधयितुं न शक्नुमः, यतो हि तेषु बोधकतारूपशक्तेः अभावो विद्यते। अन्वयव्यतिरेकौ तु तात्पर्यग्राहकत्वेनापि उपपन्नौ भवतः। किञ्चोक्तपथा 'पचति' इत्यादिषु धातोरेव कर्तृविशिष्टभावनायां लक्षणाऽस्तु तात्पर्यग्राहकत्वं तु तिङ्गादेः स्यादित्यरुचेः पक्षान्तरमाह–

**निपातानां वाचकत्वमन्वयव्यतिरेकयोः।**
**युक्तं वा न तु तद्युक्तं परेषां मतमेव नः।।[1]**

इत्थं धात्वर्थस्य प्रातिपदिकार्थस्य मिथः भेदेन अन्वयबोधो न व्युत्पन्नः, इति निपातातिरिक्तविषयः। समानाधिकरणप्रातिपदिकार्थयोः अभेदेन अन्वयः अयमपि अगत्या कल्पनीयम्। कारिकायाः द्वितीयेनांशेन ''न तु........। अर्थात् न्यायशास्त्रोक्तं प्रादिचाद्योः वैषम्यं न युक्तं भवति।

यत्तु वादिनः वदन्ति यत् चेत् सर्वे निपाताः वाचकाः तहि अर्थवत्सूत्रेणैव प्रातिपदिकसंज्ञासिद्धा, पुनः निपातस्यानर्थकस्य इति विधेः वैयर्थ्यमागतमिति। किञ्च चेत् सर्वे द्योतकाः तर्हि "चानर्थकस्य" इत्यस्य वैयर्थ्य समापतति।

तस्मात् केचन वाचकाः केचन द्योतकाः इति स्वीकरणीयम् चेन्न 'चादयो द्योतकाः प्रादयो वाचकाः' इति वैपरीत्यावधारणात् इत्यादिबहुविधरीत्या सर्वाणि मतानि विविच्य उपसंहरन् निगदति कौण्डभट्टः–

**निपातत्वं परेषां यत्तदस्माकमिति स्थितिः।**
**व्यापकत्वाच्छक्ततायास्त्ववच्छेदकमिष्यते ।।[2]**

परेषां = अन्येषां वैयाकरणादीनाम् निपातत्वं तु लिङ्गसंख्याऽनन्वयित्वे सति चादिगणपठितत्वम्, (सीदतः तिष्ठतः लिङ्गसंख्ये यस्मिन् तत् सत्त्वम्, तत् भिन्नम् असत्वमिति) एवञ्च "असत्त्वे चादयो निपातसंज्ञकाः" इत्यर्थे सर्वथा अनर्थकेषु चादिषु निपातसंज्ञानापत्तिः अतो आह शक्तिसम्बन्धेन निपातवत्वञ्च न्यायनये ईश्वरेच्छा शक्तिः, व्याकरणनये तु बोधकता, तदवच्छेदकोऽखण्डो धर्मविशेषो वा शक्तिः। एवं स्वीकारे आनन्त्यापत्तिः स्यात् अतः जातिर्वा इत्युक्तम्, किन्तु जातित्वसिद्धौ तु दीधितिविरोधः अतः उपाधिर्वाऽइत्युक्तम्। उपाधित्वञ्च– "नित्यत्वे सति अनेकसम्बद्धत्वम्" परन्तु सामान्यधर्मे प्रमाणानां पक्षपातात् शक्तता द्योतकता वा तदवच्छेदेनैव कल्प्या इति न्यायशास्त्रोक्तं मतमयुक्तं वर्तते।

**निपाताः द्योतकाः केचित् पृथगर्थाभिधायिनः।**
**आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः।।**

* * *

1. पा. सूत्रम् 1-2-82
2. वै.भू.सा.-का. 47

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# दर्शनान्तरीयदिशा व्याकरणे शक्तिस्फोटयोर्विमर्शः

डॉ. महेशकुमारद्विवेदी *

**उपक्रमः**- शब्दाज्जातः शाब्दः, शाब्दश्चासौ बोधः शाब्दबोध इति व्युत्पत्त्या शाब्दबोधे शब्दस्यैव हेतुत्वमुपलभ्यते। एवं हि शाब्दबोधम्प्रति शब्दो हेतुरिति कार्यकारण ाभावो भवति। परन्त्वेवं हि शब्दश्रवणानन्तरमेव शाब्दबोधदयस्यापत्तिर्भवति लोकव्यवहाराच्च शब्दार्थयोर्वृत्तिरूपसम्बन्धज्ञानान्तरमेव बोधस्यानुभवेन तस्यैव हेतुत्वमिति शाब्दबोधम्प्रति वृत्तिज्ञानं हेतुरिति कार्यकारणभावः सिद्ध्यति। न चैवमपि घटपदश्रवणात् पार्थबोधापत्तिरिति तत्पदजन्य- शाब्दबोधम्प्रति तत्पदजन्यवृत्तिज्ञानं हेतुरिति कार्यकारणभावो मन्यते। तथा च शब्दश्रवणानन्तरं वृत्तिज्ञानेन पदार्थोपस्थित्या शाब्दबोधो भवतीति फलति। एवं हि नागृहीतवृत्तिकस्य ज्ञानं भवतीति सिद्ध्यति। एवमपि घटपदस्य कम्बुग्रीवादिमत्पदार्थे वृत्तिरिति ज्ञाते वृत्त्योपस्थितिकाले आश्रयतयोपस्थितस्य आकाशस्यापि बोधापत्तिः तदानीं वृत्तिज्ञानस्य सत्वात्। अतस्तद्विषयकशाब्दबोधम्प्रति तदर्थनिरूपितवृत्तिज्ञानं हेतुरिति कार्यकारण- भावः स्वीक्रियते। तथा च तत्पदजन्यशाब्दबोधं प्रति तत्पदजन्यतदर्थनिरूपित-वृत्तिज्ञानं हेतुरिति कार्यकारणभावस्वरूपं संजातम्।[1]

शाब्दबोधः शब्दबुद्धित्वावच्छिन्नो भवति। यस्य चार्थबोधो भवति सोऽर्थः शाब्दबोधविषयो भवति। एवं हि "उक्तकार्यकारणभावस्य" तत्पदजन्यतदर्थ-विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदजन्यतदर्थनिरूपितवृत्तिज्ञानं हेतुरिति निष्कृष्ट-स्वरूपमवगन्तव्यम्। विशेषविशेषणभावव्यत्यासेन गृहीतवृत्तिकस्य घटपदस्यापि घटत्व-विशिष्टबोधापत्तिरिति तत्पदजन्यतद्धर्मावच्छिन्न-विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदजन्यतद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानं हेतुः स्वीक्रियते। एवमपि विस्मृतवृत्तिकस्य तत्पदाज्ञानवतश्च बोधापत्या तादृशवृत्या विशिष्टस्य ज्ञानस्यैव हेतुत्वं कल्प्यते। एतदेव सर्व ज्ञात्वा गदाधरसमर्थितः तत्पदजन्यतद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्पदजन्यतदर्थनिरूपितवृत्तिज्ञानं हेतुरिति[2] निष्कृष्टस्वरूपमवगन्तव्यम्।

---

* सहायकाचार्यः, श्रीएकरसानन्द-आदर्शसंस्कृतमहाविद्यालयः, मैनपुरी-205001 (उ.प्र.)

1. परमलघुमञ्जूषा शक्तिनिरूपणे।
2. व्युत्पत्तिवादे।

अथापि विशेषणविशेषभावव्यत्यासेन गृहीतवृत्तिकस्य घटपदादपि घटत्व-विशिष्टबोधापत्तिरिति। तत्पदजन्यतद्धर्मावच्छिन्न-विषयकशाब्दत्वावच्छिन्न- निरूपित-वृत्तिविशिष्टज्ञानं हेतुरिति कार्यकारणभावो नागेशेन स्वग्रन्थे[1] वर्णितः।

अत्र ज्ञाने वृत्तिवैशिष्ट्यञ्च स्वविषयकोद्बुद्धसंस्कारसमानाधिकरण्य, स्वाश्रयपदविषयकत्व इत्येतदुभयसम्बन्धेन[2]।

"अनुमानेनैव शब्दादर्थबोधे जाते किं वृत्त्यादिना। अपि च ज्ञानस्य क्षणिकत्वेन तेन शाब्दबोधजननोऽप्यसम्भव इति वदन्तो नागृहीतवृत्तिकस्य शाब्दबोधोदयेनोद्बुद्धसंस्कारस्य च शाब्दबोधजनकत्वेन च परास्ताः। अतएव 'न हि गुड इत्युक्ते मधुरत्वं प्रकारतयावगम्यते' इति समर्थसूत्रभाष्य[3] सङ्गच्छते। गुडत्वजात्यवच्छिन्नः गुडपदवाच्य इत्येवं बोधो गुडशब्देन भवति, मधुरत्वञ्चात्र "ऐक्षवत्वात्" इति मानान्तरगम्यन्न तु गुडशब्दगम्यम्। तत्र गुडपदस्थवृत्त्यभावादिति स्पष्टम्।

नैयायिकदिशा अस्माच्छब्दादयमर्थो बोधब्य इतीश्वरेच्छा शक्तिः।[4] अत्र अस्मादित्यत्र पञ्चम्या जन्यत्वमर्थः, बुध् धातोश्च बोधः, विषयताश्रयश्च तव्यप्रत्ययार्थः, पञ्चम्या जन्यत्वमर्थः, जन्यत्वेन नित्यसाकाङ्क्षतया जनकत्वस्याक्षेपः। तथा चोक्तेश्वरेच्छाया "एतत्पदनिष्ठजनकतानिरूपितजन्यतावद्बोधीयविषयताश्रया-भिन्नार्थ" इति स्वरूपं भवति। अथवा "इदं पदमिममर्थम्बोधयतु'' इतीश्वरेच्छा शक्तिः। अत्र इमम् इत्यत्र द्वितीयार्थविषयत्वं, बोधश्च बुध्धातोऽर्थः, णिजर्थो जनकत्वं, तिङर्थश्चाश्रयः। एवमेतदीश्वरेच्छाया "इदमर्थविषयकबोधनिष्ठजन्यतानिरूपितजनकतावदेदं भवतु'' इति स्वरूपमस्ति। एतदुभयोरीश्वरेच्छयोः शक्तित्वे द्विविधः शक्तिग्रहः पदविशेष्य-कोऽर्थविशेष्यकश्चेति लाघवाद-ईश्वरेच्छामेव शक्तिसंकेतश्च स्वीकुर्वन्ति तार्किकाः।

तथा च शक्तेर्विषयत्वलक्षणस्य सम्बन्धस्य पदेऽर्थे बोधे च सत्वेऽपि बोधनिष्ठजन्यतानिरूपितजनकतावत्वेन शक्तिविषयो वाचकः पदजन्यबोधविषयत्वेन शक्तिविषयो वाच्यः, इति न क्वापि व्यभिचार इति साधयन्ति च, तदयुक्तं प्रतिभाति। यतो हि सम्बन्धो हि सम्बन्धिद्वयभिन्नत्वे सति, द्विष्ठत्वे च सति, आश्रयतया विशिष्टबुद्धिनियामक इत्यभियुक्त-व्यवहारः[5] यथा घटवद् भूतलमित्यादौ संयोगरूपः सम्बन्धः सम्बन्धिभ्यां भिन्नो द्विष्ठो घटनिरूपिसंयोगाश्रयो भूतलमिति विशिष्टबुद्धिनियामकोऽपि। इच्छायाश्च सम्बन्धिनोराश्रयतानियामकत्वाभावेन सम्बन्धत्वं न सिद्धयति। न च घटशब्दोऽर्थो वेच्छावान् इति व्यवहारो भवति। अत "इच्छा शक्तिः" इति स्वीकर्तु न शक्यते।

---

1. वैय्याकरणसिद्धान्तलघुमञ्जूषायाः स्फोटनिरूपणे (सरलाटीका पृष्ठ-37)
2. तत्रैव
3. तत्रैव
4. वै.सि. लघुमञ्जूषा-स्फोटनिरूपणे
5. तत्रैव स्फोटनिरूपणे

तस्मात् पदपदार्थयोर्वाच्यवाचकभावसम्बन्ध एव शक्तिरिति वैयाकरणैः स्वीक्रियते। एवं हि अखण्डोपाधिरूपपदार्थान्तरम्। अपि च वाच्यवाचकभावः पदार्थोभयनिष्ठ एव। एवञ्च इच्छाशक्तिरितिपक्षे जनकत्वं बोधजनकत्वं वेति शक्तिरिति पक्षे द्विष्ठत्वाद्यभावरूपदोषाणां वाच्यवाचकभावरूपे सम्बन्धे सर्वथा निरासः संजायते, यतो हि वाच्यवाचकभावसम्बन्धः शब्दार्थोभयसम्बन्धिभिन्नो द्विष्ठो, विशेष्यविशेषण-सम्बन्धरूपत्रितयविषयावगाहिन्या विशिष्टबुद्धेर्नियामकश्चेति तस्य शक्तिरूप- सम्बन्धत्वं सर्वथा साध्विति सिद्ध्यति।

वैयाकरणैः शब्दार्थयोस्तादात्म्यं स्वीक्रियते। तत्र शब्दार्थयोस्तादात्म्य-स्वीकारे मधुशब्दोच्चारणमात्रेणैव माधुर्यरसस्यास्वादस्य मुखे, बह्नि- शब्दोच्चारणमात्रेणैव च मुखे दाहस्य चापत्तिरिति तार्किकैर्यदुच्यते, तत् तादात्म्यस्वरूपे भेदाभेदस्योपपादनेन वैयाकरणमतेनायुक्तमेव। यतो हि तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वमिति तादात्म्यस्य लक्षणं वैयाकरणैः कृतमस्ति। वस्तुतो बौद्ध एवार्थः शक्यः पदमपि स्फोटात्मकं प्रसिद्धं, तयोस्तादात्म्यं भवति। तत्र बौद्धे वह्न्यादावर्थे दाहादिशक्तिमत्वस्य सर्वेषामनुभवविरूद्धत्वमेव। अतएव - "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति विकल्पसूत्रं[1] सङ्गच्छते। शब्दज्ञानमात्रेण बुद्धावनुपतनशीलो वस्तुशून्यो = बाह्यार्थरहितो विशेषेण कल्प्यत इति विकल्पः। बुद्धिपरिकल्पित इत्यर्थः। कूर्मक्षीरचये स्नातः एष वन्ध्यासुतो याति शशशृङ्धनुर्धरः सङ्गच्छते। एवं शशशृङ्गमेव धनुष्कृत्वा धारयन् च याति इत्यर्थः अत्र बन्ध्यायाः पुत्रस्यैवासम्भवत्वेन यानक्रियायामन्वयानुपपत्तिस्तु आकाशे पुष्पाणां नितरामभावे आकाशे तद्भूषणधारणमपि न सम्भाव्यते। अतस्ततः कूर्माणां क्षीरस्यैवासम्भवत्वेन तत्र स्नानाक्रियाऽपि सर्वथासम्भवा। एवमेव शशशृङ्गस्यैवासम्भवेन तद्धनुर्धारणमप्यसम्भवमिति बाह्यार्थशून्यत्वेनार्थवत्वाभावात् प्रातिपदित्वादिकमेवोपर्युक्तेषु न स्थलेषु सम्भाव्यते।

अतोऽत्र बुद्धिपरिकल्पित-मेवार्थवत्वमादाय प्रातिपदिकत्वेन स्वादीनां सिद्धिर्भवति। अन्यथा-एतेषां प्रयोगाणां सर्वथाभाव एव भविष्यति।

यत्तु- तार्किकैस्तत्र शशशृङ्गमित्यत्र शशीयत्वभ्रम इत्युच्यते तदपि नोचितम् शशशब्दवाच्यजन्तुदर्शनरूपबाधे शशशृङ्गन्नास्तीति वाक्ये हि प्रातिपदिकत्वानापत्तेः। अर्थपदयोस्तादात्म्यात्तद्दर्शतादात्म्यापन्नः शब्दो भिन्न इति हेतोरर्थभेदात् शब्दभेद इति व्यवहारः समानाकारेणैकोऽयं शब्दो बह्वर्थ इति व्यवह्रियत इति ।

**शक्तेर्भेदः**:- रूढिर्योगो योगरूढिश्चेति शक्तिस्त्रिधा भवति। शास्त्रकल्पितावयवार्थ-मानाभावे समुदायार्थनिरूपिता शक्तिः रूढिर्भवति। यथा- मणिनूपुरादौ शास्त्र-कल्पितावयवार्थप्रतीतिर्न समुदायार्थस्यैव प्राधान्यं भवति। शास्त्रकल्पिता-वयवार्थनिरूपिता शक्तिर्योग इति यथा- पाचकादौ शास्त्रकल्पिता-वयवैरेवेयं प्रतीतिर्भवति। शास्त्र-

1. परमलघुमञ्जूषा - शक्तिप्रसङ्गे बौद्धपदार्थनिरूपणे।

कल्पितावयवार्थान्विताशेषभूतार्थनिपरूपिता शक्तिर्योगरूढिः।[1] यथा पङ्कजपदे पङ्कजनिकर्तृत्वमिति बोधो भवति न तु यस्य कस्यचिदपि पङ्कजनिकर्तृणः। नन्वत्र लक्षणयैव कार्यनिर्वाहे कथं योगरूढिद्विशक्तिरिति चेन्न, पङ्कजेऽनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानञ्च विनाऽपि पद्मार्थस्य बोधात्। क्वचित्तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधो भवति। यथा "भूमौ पङ्कजमुत्पन्नं कह्लारकैरवमुखेस्वपि पङ्कजेषु" इत्यादि स्थलेषु। अत्र पूर्वं केवलं रूढ्यैवार्थस्य प्रतीतिर्भवति योगार्थस्य बाधाद्। द्वितीये च केवलेन योगेनैवार्थस्य प्रतीतिर्भवति। स्पष्टं चेदं सर्वम् **"आद्वहि"** इति सूत्रे भाष्ये। अश्वगन्धादिपदे औषधिविशेषस्यार्थस्य रूढिशक्त्या बोधो भवति। अश्वसम्बन्धिगन्धवत्तया वाजिशालाबोधो यौगिकशक्त्या भवति। एवमेव-मण्डपपदं गृहविशेषे रूढं मण्डपानकर्तरि च यौगिकमित्यत्र यौगिकरूढि-शक्तिः स्वीक्रियते। अत्रेदं तत्त्वमर्थभेदाच्छब्दभेद इति सिद्धान्ते योगरूढि-शक्त्यैव कार्यनिर्वाहे अस्य शक्तिभेदस्य काचिदावश्यकता नाविष्क्रयते। परन्तु अर्थभेदेऽपि शब्दैक्यपक्षेरस्याः शक्तेरावश्यकता अपरिहार्या भवतीति सिद्धान्तः।

तार्किकमते लक्षणायाः स्वरूपं दर्शयन् "स्वशक्यसम्बन्धो लक्षणा" इति नागेशेनोक्तं परमलघुमञ्जूषायाम्। अत्र स्वपदेन तस्यैव ग्रहणं यच्च लाक्षणिकत्वेनाभिप्रेतमस्ति। तस्य यः शक्योऽर्थस्तेन सह यः सम्बन्धः, सैव लक्षणा। तद्यथा "गङ्गायां घोष" इत्यत्र स्वं गङ्गापदं तच्छक्यः प्रवाहविशेषस्तेन सह यः तीरो विद्यते। अतो गङ्गापदस्य तीरे लक्षणा भवतीति लक्षणसमन्वयः।

मुख्यार्थबाधनिरपेक्षबोधजनको मुख्यार्थसम्बन्धसाधारणः प्रसिद्धा-प्रसिद्धार्थ विषयको वक्त्रादिप्रतिभादुद्बुद्धः संस्कारविशेषो व्यञ्जना।[2] इति मञ्जूषाकारमते तथा च "निःशेषच्युतचन्दनमि" इत्यादौ मुख्यार्थबाधाभावेऽपि असम्बन्धेऽप्रसिद्धार्थे चार्थेऽपि व्यञ्जना भवतीति सर्वसिद्धान्तः। वैयाकरणैरपि एवं स्वीक्रियते। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यंजकत्वमिति निपातानामपि व्यङ्ग्यता वैयाकरणानुमतेति सुसिद्धैव। यत्तु-तार्किका "दूरस्था भूधरा रम्याः, इत्यादौ नानार्थकस्थले भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिसम्भवे "गङ्गायां घोषः" इत्यादौ शीतत्वपावन-त्वादिविशिष्टितीरस्यापि लक्षणयैव प्रतीतिसम्भवे व्यञ्जना न स्वीकार्या इत्याहुः तन्नोचितं प्रतिभाति।

यतो हि- पूर्वोक्तव्यञ्जनालक्षणेन स्पष्टमेव प्रतीयते यल्लक्षणा मुख्यार्थबाध-सापेक्षा भवति व्यञ्जना च निरपेक्षा अपि भवति।

1. तत्रैव परमसिद्धान्तलघुमञ्जूषाशक्तिनिरूपणे
2. परमलघुमञ्जूषा, व्यञ्जनावृत्तिप्रसङ्गः

स्फोटविमर्शः-वृत्त्याश्रयप्रतिपाद्ये द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्तेः प्रत्येकं वर्णाना- मुच्चरितप्रध्वंसित्वेन मण्डूकोतोलनवत् द्यौगपद्यासम्भवात् "इको यणचि" इत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थेऽयं पूर्वायं पर इति नष्टस्य प्रत्यक्षविषयेदंशब्देन पौर्वापर्यव्यवहारायोगाच्च वर्णसङ्घातरूपपदस्य वृत्त्याश्रयत्वासम्भवेन शक्तिलक्षणाव्यञ्जना अन्यतमरूपाया वृत्तेराश्रयः क इत्यपेक्षायां नैयायिकाः वर्णसङ्घातरूपपदस्यैव वृत्त्याश्रयत्वं वदन्ति। वर्णानामनित्यत्वेप्य-वहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्वमुत्तरोत्तरवर्णे संस्कारवशाद् शक्तिं गृहीत्वा, शब्दजशब्दन्यायेन वा पदस्य प्रत्यक्षत्वं चोपादयन्ति। पदप्रत्यक्षा-भावेऽपि पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहित चरमवर्णानुभवादेव शाब्दबोधं सम्पादयन्ति।

किन्तु तेषां मतन्न समीचीनम्। प्रथमोपायेऽयं पूर्वः, अयं पर अयमभिलाप सम्भवेनाव्यवहितोत्तरत्वसम्बन्धायोगात्, नष्टविद्यमानयोरव्यवहितो-त्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च। द्वितीयोपाये शब्दजशब्दन्यायेन वदप्रत्य-क्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयत्वस्य ग्रहानुपपत्तेः। अविद्यमाने आश्रयत्वाङ्गीकारे "नष्टो घटो जलवान्" इत्याद्युपपद्यतेश्च। तृतीयोपाये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् "सरो रसो" नदी दीन" इत्यादौ विपरीतसंस्काराद् बोधेन व्युत्क्रमेण बोधापत्तेः।

अतो वैयाकरणा वृत्त्याश्रयत्वेन स्फोटमेवाभ्युपगच्छन्ति। स च स्फोटः परापश्यन्ती-मध्यमा-वैखरी-चतुर्विधासु वाक्षु मध्ये या मध्यमा वाक् तथा कृतनादेनाभिव्यक्तो भवति। तदुक्तम्।

**परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता**
**हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा।**
**वैखर्या हि कृतो नादः परश्रवणगोचरः**
**मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते।। इति ।।**[1]

तादृङ्नादव्यङ्ग्यः स्फोटात्मकः शब्दो नित्यश्च। तदुक्तं हरिणा-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[2]

इति। अतएव स्फुटत्यर्थो यस्मादिति स्फोट इत्यर्थः स्फोटस्य सङ्गतो भवति। स च स्फोटो यद्यप्येकमेवोऽखण्डो ध्वनिव्यतिरिक्तश्च तथापि जपाकुसुमादि लौहित्यपीतत्वादिव्यञ्जकोपरागवशात्, लोहितपीतः, स्फटिक इति भानवद् वर्णादिव्यङ्ग्यो वर्णरूपः पदरूपो वाक्यरूपश्चेति भवति मुखे मणिकृपाणदर्पाणां व्यञ्जकोपाधिवशाद् दैर्घ्यबर्तुलत्वादिभानवत् व्यञ्जक-ध्वनिगतं कत्वगत्वादिकं स्फोटे भासते। तदुक्तम्-

1. परमलघुमञ्जूषा, स्फोटनिरूपणप्रसङ्गः
2 वाक्यपदीयम् - 1/1

पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।[1]

इति। यथा- एकस्याकाशस्य घटाकाशो मठाकाश इत्युपाधिको भेदः। यथा चैकस्यैव चेतनस्य जीवेश्वरभेद औपाधिक एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात् ककारो गकार इत्यौपाधिको भेदव्यवहारो भवति।

**भेदः**- अष्टविधश्च स स्फोटः- वर्णव्यक्तिस्फोटः, वर्णजातिस्फोटः, पदव्यक्तिस्फोटः, पदजातिस्फोटः, वाक्यव्यक्तिस्फोटः, वाक्यजातिस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटश्चेति भेदात्।

वस्तुतस्तु- वाक्यस्फोटो वाक्यजातिस्फोट एव वा मुख्यो वृत्त्याश्रयश्च तत एव लोकेऽर्थबोधात्। तदुक्तम् - अनेकव्यक्त्यभिव्यङ्ग्या जातिस्फोट इति स्मृत इति।

**निष्कर्षः**- "घटमानय" इत्यादि वाक्ये घटकर्मकानयनबोधेच्छयोच्चरितत्वा-भावज्ञाने, अन्यबोधनेच्छयोच्चारितत्वाज्ञाने वा तथा बोधानुदयेन तयोः प्रतिबन्धकत्वककल्पने गौरवेण लाघवात् तथा बोधे "इदं वाक्यमेदर्थप्रतीति इच्छाया वक्त्रोच्चारितम्" इत्याकारकं तात्पर्यज्ञानं हेतुः। नानार्थकपदस्थले पदविषयेऽपि तात्पर्यज्ञानं कारणम् तद्ग्राहकञ्च प्रकरणादिकम्। अतएव प्रकरणादिज्ञानाभावे "इदं पदमेतदर्थकम्", एतदर्थकं वेति सन्दिह्यते। मौनिलिखितवाक्यस्थलेऽपि तस्य सूक्ष्ममुच्चारणमस्त्येवेति नैयायिकादयो यद् वदन्ति तन्न समीचीनम्। तुकादिवाक्याद्देवताप्रसादेन पूर्वजन्मसंस्कारेण वा मुखबालककृतोत्तम-काव्याद्वक्तृतात्पर्यव्यतिरेके निश्चयेऽपि बोधोदयेन तस्य बोधे हेतुत्वासम्भवात्।

प्राचीनो हि "वह्निना सिञ्चति" इति वाक्याद् बोधवारणायार्थनिष्ठ-योग्यताऽपि शाब्दबोधे कारणं मनुते सा च तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गतावच्छेदकताख्ये सम्बन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावः। तेन विशिष्टाभावादिकमादाय न दोषः। तज्ज्ञानं कारणं संसर्गज्ञानं तु तात्पर्यविषयं वा सुलभम् यद्वा प्रतियोगितावच्छेदकत्वरूपायोग्यतानिश्चयो बोधप्रतिबन्धक इति यद् वदन्ति तन्न समीचीनम्। शाब्दप्रयोज्ये बोधे बाधज्ञानस्याप्रतिबन्धकत्वात्, तदभावज्ञानस्याकरणत्वाच्च। सत्यपि "अस्यक्षेणिपतेः परार्धपरया लक्षीकृताः संख्याः एष बन्ध्यासुतो याति खपुष्पकृतशेखरः" इत्यादितो बाधदर्शनात्। एवं शक्तिस्फोटयोस्तत्सहकारिकारणतया एकमैव पौर्वापर्यधियोपस्थापनमिति दिक्।

* * *

1 वाक्यपदीयम् - 1/73

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# समासान्तविषये प्राच्यनव्ययोः मतभेदविचारः

डॉ. अरविन्दमहापात्रः *

पाणिनीयव्याकरणस्य सूत्रार्थविवेचनप्रकारः द्विधा भिद्यते, अष्टाध्यायीक्रममनुरुद्ध्य प्रक्रियाक्रमञ्चानुरुद्ध्य। भट्टोजीदीक्षितात् समारभत नव्यव्याकरणस्य विवेचनप्रकारः यस्मिन् न केवलं युक्त्या विरुद्धमतप्रत्याख्यानं लभ्यते, अपि तु शास्त्रानुशीलनपद्धतेः कश्चिदभिनवक्रमः प्रवर्त्तित इव आलभ्यते। सूत्रार्थविवेचनस्य नव्या शैली प्रागलभ्यं प्राप्ता सम्प्रति विद्वत्सु प्रकामं समादरं लब्ध्वा प्राचीनक्रममतिशेते।

समासान्ताधिकारे पठितानां सूत्राणां दीक्षितेन तथा व्यवस्थापनं कृतं येन तत्तत्समासेन संबद्धानां सूत्राणां तत्तत्प्रकरणसङ्गत्यनुसारं समावेशं स्यात्, येषां येषां समासान्तानां येन न समासेन सम्बद्धः तेषां तत्र तत्र विन्यासः कृतः। ये समासान्ताः समासविशेषमनुरुद्ध्य विहिताः तेषां कृते समासान्तप्रकरणं नामप्रकरणं समासप्रकरणस्यावसाने प्रकल्प्योपन्यासः कृतः। काशिकायां प्रतिसूत्रं यथावृत्ते समुल्लेखः तथा सिद्धान्तकौमुद्यां नास्ति। बहुषु सूत्रेषु वृत्तेरप्यभावः, बहुषु च केवलं विधेयस्यैव समुल्लेखः। मन्ये यत्र सूत्रेषु अनुवृत्त्यादीनामपेक्षा नानुभूताः, अर्थावबोधे न तु वृत्ति समुपन्यास उपेक्षितः। यत्र वा प्रकरणवशात् विधेयादेः बोधस्य सुतरां सिद्धिः, तत्रापि सूत्रार्थविवरणस्य उपन्यासः नास्ति। तथा हि येषु सूत्रेषु वृत्तिसमुल्लेखो नास्ति तानि इमानि सूत्रार्थविधानेऽपि काशिकाकारस्य भट्टोजीदीक्षितस्य च परस्परं मतभेदः क्वचित् क्वचित् लक्ष्यते। उदाहरणप्रत्युदाहरणविषये, प्रवृत्तेरप्रवृत्तेश्च विषये, अनभिधानविषये च मतभेदः लक्ष्यते।

एवमेव काशिकायाः टीकाकृतोः न्यासपदमञ्जरीकारयोः मिथः मतभेदः दृश्यते। तद्यथा अत्र आदौ काशिकाकारमतम्, तदनु न्यासकारमतम्, अनन्तरं पदमञ्जरीकारमतमुपन्यस्यते।

**समासान्ताः** इति सूत्रे एते समासान्ताः किं स्वरूपाः इति विषये विचारः दृश्यते। तत्र नव्यानां प्राचीनानाञ्च वैयाकरणानां मतभेदः स्पष्टमनुभूयते। उभययोः मतयो आधारः महाभाष्यस्य वचनमेव। उभे अपि मते बहुविवेचनसाधिते स्तः। उभयोरपि

*प्रभातकुमारमहाविद्यालयः, कण्टाइ, पूर्वमेदिनीपुरम्, पश्चिमबङ्गः

मतयोः एकत्र सङ्केतः प्रौढमनोरमायां मूले उपलभ्यते। तत्र भट्टोजीदीक्षितेन इदमुक्तं यत्- **समासान्तः समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः तेन उपशरदमित्यत्र नाव्ययीभावादतोऽम्त्वापञ्चम्या इत्ययं द्विपुरी इत्यादौ द्विगो इति ङीप् च सिद्ध्यति।**[1] मनोरमायामिमं वाक्यमुपजीव्य उभयोः मतयो आधारविचारं कुर्वन् शब्दरत्नकारः लिखति यत्- **अत्र समासस्य चरमावयवः समासान्त इति तन्मतं तत् समासान्ता अन्त इत्यादिसूत्रेषु भाष्ये स्पष्टम्**[2]। इदं नव्यमतम्। **किन्तु समासान्तः समासार्थोत्तरपदस्य चरमावयव**[3] इति पक्षः स्वरूपसूत्रभाष्ये कैयटेन समुद्भावितम् इदं मतं प्राचीनमतम्। शब्दरत्नकारेण प्राचीनमतस्य चिन्त्यतां पुरस्कृत्य इदमुक्तं यत्- **समासपदस्य समासार्थोत्तरपदे लक्षणास्वीकारे किमपि प्रमाणं नास्ति। किञ्च समासार्थवाक्यस्यैव उपचारतः समासपदेन ग्रहणमिति अर्थस्य गोस्त्रियोरूपसर्जनस्य इति भाष्ये उक्तत्वात् । किञ्च अन्तः इति सूत्रस्थ भाष्येणापि उत्तरपदावयवत्वपक्षस्य विरोधाच्च।**[4] एतत् विवरणेन इदमायातं यत् शब्दरत्नकारस्यापि समासचरमावयवत्वपक्ष एव सम्मतः। एतेन इदमप्युक्तं यत् स्वरूपसूत्रस्थभाष्यमपि नव्यमतानुगुण्येन सुयोजयितुं शक्यत इति समासावयवत्वपक्षस्वीकारेऽपि स्वरूपसूत्रस्थभाष्येण विरोधो न भवतीति तस्य तात्पर्यम्।

शब्दरत्नकारस्येदं मतं यत् न केवलं ममैव अपि तु मनोरमाकारस्यापि नव्यमते अभिसन्धिः। अतो हेतोः दीक्षितेनाद्यपक्षमनुकूलतया विभाव्य फलद्वयं प्रदर्शितम्, अर्थात् उपशरदमित्यत्र **नाव्ययीभावादिति** सूत्रेण टजन्तस्यादन्ताव्ययीभावत्वप्रयुक्तोऽम् सिद्ध्यति। किञ्च द्विपुरी इत्यत्र **ऋक्पूरब्धूपथामानक्षे** इत्यनेन अप्रत्ययान्तस्य द्विपूरशब्दस्य अदन्तत्वप्रयुक्त ङीप् च सिद्धः। यद्यत्र आशङ्क्येत यत्- द्विपूरी इत्यादौ अकारान्तोत्तरपदत्वं नास्ति, अतः तद्भावे **अकारान्तोत्तरपदद्विगुस्त्रियामिष्ट** इति वचनेन स्त्रीत्वं कथं सम्भवेदिति? तन्न समुचितम्, यतः लिङ्गानुशासनसूत्राणि केवलं सिद्धलिङ्गानुशासनानामनुवादं कुर्वन्ति न तु विधानम्। अत अत्रत्यद्विगुसमासे तेन स्त्रित्वाभावस्य नियमनं कर्तु न शक्यते।[5] अतो हेतोः समासान्ताः इत्यादिसूत्रभाष्ये **लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य** इत्युक्तम् दृश्यते।[6] यद्यत्र एवमुच्यते यत् समासान्तानां समासार्थोत्तरपदावयवत्वेऽपि अवयवावयवस्य समुदायावयवत्वेन **उपशरदम्, द्विपूरी** इति प्रयोगयोः सिद्धिः सम्भवतीति। किन्तु तन्न युक्तम्, यतः उत्तरपदावयवत्वस्वीकारे **अन्तः** इति सूत्रस्थभाष्यविरोधात्। स एव विरोध एवं विवरयितुं शक्यते - **अन्तः इति सूत्रे भाष्यकारेणेदं विचारितं यत् समासान्तोदात्तत्वं**

---

1. प्रौढमनोरमा 5-4-68 ।
2. तत्रैव शब्दरत्नकारः ।
3. स्वरूपसूत्रे भाष्ये कैयटः ।
4. समासान्ताः सूत्रे शब्दरत्नकारः ।
5. समासान्ताः सूत्रे प्रौढमनोरमाकारः ।
6. समासान्ताः सूत्रे भाष्ये ।

**भवतु उत्तरपदस्य अन्तोदात्तत्वं वेति विकल्पे अयं विचारः कृतः यत् - यदि समासस्य अन्तोदात्त्वं स्वीक्रियेत तदा इदं प्रथमका इत्यादौ कप अन्तोदात्तत्वापत्तिः स्यात्, यदि उत्तरपदस्यान्तोदत्तत्वं स्वीक्रियेत तदा "अनृतः" इत्यत्र अन्तोदत्तत्वस्य असिद्धिः स्यात्, एवं तात्पर्यकेन भाष्येण विरोधो माभूत्। अतः उत्तरपदावयवत्वपक्षः न स्वीकर्तुं शक्यते इत्युक्त्वा शब्दरत्नकारेण स्वविचारः उपसंहृतः।**[1]

**कैयटेन तु गोस्त्रियोरुपसर्जनस्य इति सूत्रे समासपदस्य समासार्थविग्रहवाक्य-स्थोत्तरपदलक्षणोत्तरपदावयवत्वम् उक्तम्।**[2] तथा च तेन स्वरूपसूत्रभाष्ये इदमुक्तं यत् उत्तरपदावयवत्वमित्यपि भाष्यकारस्य मतमिति। प्राचीनमतस्यैव संक्षेपेण विवेचयितुं शक्यते।

समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदावयवाः समासान्ताः। अत एव स्वरूपसूत्रभाष्ये कृतद्वन्द्वानां विभक्तौ परत एकशेषेतिपक्षे ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोतीत्युक्तिः सङ्गच्छते। ऋच्छब्दयोः द्वन्द्वे कृते ऋक्पूरब्धूः पथामानक्षे इत्यप्रत्यये ऋच् ऋच् औ इत्यवस्थायामसारूप्यादेकशेषो न स्यादिति भाष्यार्थः।[3] समासावयवत्वे द्वयोः शब्दयोः सारूप्यसत्त्वेन असारूप्यादेकशेषो न प्राप्नोति इति भाष्यासङ्गतिः स्पष्टैवेत्याहसमासार्थोत्तरपदस्य वा चरमावयव इति। अत एव द्विधूरी, द्विपूरी इत्यादि सिद्धयति । **समासावयवत्वे तु उत्तरपदस्यादन्तत्वाभावात् अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः इत्यस्याप्रापत्या स्त्रीत्वं न स्यात् न च समासान्तानामुत्तरपदावयवत्वे उपशरदमित्यत्र अव्ययीभावस्यादन्तत्वाभावेन नाव्ययीभावादतोऽम्त्वपञ्चम्याः इत्यमादेशानापत्तिः अवयावयव समुदायावयव इति न्यायेनाव्ययीभावस्याप्यदन्तत्वेन तदसिद्धिरिति प्राञ्चः।**[4]

नव्यानां मतानुसारं समासान्ताः इत्यस्य समासस्य चरमावयवा इत्यर्थः। तत्र समासपदं तत्सम्वन्ध्यलौकिकविग्रहवाक्यपरम्। एवमव्ययीभावादिपदान्यपि तत्सम्वन्ध्यलौकिकविग्रह-वाक्यपराण्येव । एवञ्च समासार्थालौकिकविग्रहवाक्यान्तावयवा इति फलति। तेन बहुकुमारिक इत्यत्र गोस्त्रियोरिति ह्रस्वो न, समासात् प्राक् तत्समकालं वा समुदायस्याप्रातिपदिकत्वेन उपसर्जनं यो गोशब्दःस्त्रिप्रत्ययान्तञ्च तदन्तसमासाण्णिजन्तप्रातिपदिकस्य ह्रस्वेत्यर्थकस्याप्राप्तेः कपि कृते स्त्रीप्रत्ययान्तत्वाभावात्। तदुक्तं भाष्ये - **कपि ह्रस्वस्य प्रतिषेधो वक्तव्यः, बहुकुमारीकः न वक्तव्यः कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वं न भविष्यति, इदमिह सम्प्रधार्य कप् क्रियतां ह्रस्वत्वमिति, परत्वात् कप्, ननु चायं कप्समासान्त इत्युच्यते, तादर्थ्यात्ताच्छब्दं भविष्यति, येषां पदानां समासो न तावत् तेषाम् अन्यद् भवति कपं तावत् प्रतीक्षते**[5] इति।

1. समासान्ताः सूत्रे शब्दरत्नकारः ।
2. काशिका 1-2-48 ।
3. काशिका 5।-4-74 सूत्रे भाष्ये
4. प्रौ,म. 5-4-68 ।
5. प्रौ,म. 5-4-68 ।

अन्तः इति सूत्रे भाष्ये च किं समासस्यान्त उदात्तः, आहोस्विदुत्तरपदस्य, आद्ये इदम्प्रथमका इत्यादौ कपि पूर्वपदस्योपसंख्यानङ्कर्त्तव्यम्। अन्त्ये अनृचः इत्यादौ **नञ्सुभ्याम्...** त्यनेनान्त्याकारस्योदात्तत्वापत्तिः इत्युक्तम्। यदि समासे कृते समासान्तः प्रवर्त्तते तदा इदम्प्रथमका इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् बहुव्रीह्याविदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्पष्टैव।[1]

समासान्ताः इत्यत्र तादर्थ्यात्ताच्छब्दः इति भाष्यप्रमाणात् समासपदस्य समासार्थालौकिकविग्रहवाक्ये लाक्षणिकतया समुदायचरमावयवत्वमेव। अत एव अन्त इति सूत्रे भाष्ये समासस्यान्तोदात्तत्वापत्तिमुक्त्वाऽन्त्ये अनृचः इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा लक्ष्यानुरोधात्क्वचिदुत्तरपदान्तोदात्तत्वं क्वचित्समासान्तोदात्तत्वमित्युक्तिः सङ्गच्छते। द्विपूरीत्यादौ समुदायस्य स्त्रीत्वन्तु लिङ्गमशिष्यं लोकाश्रयत्वात् लोकसिद्धलिङ्गानुवाल्लिङ्गस्य इति समासान्ताः सूत्रभाष्योक्त्या लिङ्गानुशासनस्यानुवादकत्वेन लोकादेव सिद्धेः। अत एव परवल्लिङ्गमिति सूत्रसत्त्वेऽपि द्विनावम्, अर्धखारम् इत्यत्र नपुंसकत्वस्य सिद्धिः। अत एव अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः इत्यत्र उत्तरपदग्रहणस्य पञ्चराजमित्यादौ स्त्रित्वाभावरूपं फलं सङ्गच्छते। अतः उपशरदम् इत्यत्र नाव्ययीभावादिति अम्, अव्ययानां भमात्रे इति टिलोपाभावश्च सिद्धः। पूर्वभाष्याव्ययीभावत्वाभावेनानव्ययत्वात्। न च समुदायावयवत्वे स्वरूपसूत्रस्थभाष्यविरोधः। समुदायावयवत्वेऽपि तद्भाष्यविरोधाभावात्। तथा हि ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषः न प्राप्नोति इति भाष्यम्। विभक्तौ परतः कृतद्वन्द्वानामेकशेष इति पक्षे समासान्तप्राग्भागस्य विभक्त्यव्यवहितपूर्वत्वाभावः। तद्विशिष्टस्य तु न स्वरूपमित्युक्तम् भाष्ये असारूप्यादिति। किञ्चोत्तरपदावयवत्वे समासान्ताः इत्यत्र समासपदस्य समासार्थालौकिकविग्रहवाक्यघटकोत्तरपदे लक्षणायां लक्ष्यतावच्छेदके गौरवञ्चेत्याहुः। अन्ये तु ऋक् च ऋक् च ऋचौ असारूप्यादेकशेषो न प्राप्नोति इति भाष्ये एकशेषप्राप्तौ ऋच इत्यस्यानर्थकत्वरूपहेतोरनुक्त्वोत्तरपदावयवत्वमेव, अन्यथा भाष्यस्य न्यूनापत्तिः। उत्तरपदावयवत्वे तु ऋच इत्यत्रार्थवत्वस्यैव सत्वेन न्यूनत्वाभावः न च विशिष्टरूपोपादानाभावेन अर्थवद्ग्रहणे इति परिभाषाया अप्राप्त्या स्वरूपमिति सूत्रेणार्थवता एकशेष इत्यत्र प्रमाणाभावः, सहविवक्षायामेवैकशेषस्य प्रमाणसिद्धत्वेन समुदितार्थविषयकबोधतात्पर्येणोच्चरितानां स्वरूपाणामेवैकशेषोद्देश्यतावच्छेदकाक्रान्ततयार्थवत्वाभावे च तद्व्याप्यस्य समुदितार्थबोधकत्वरूपाण्यप्यधर्मेण हेतुना व्यापकस्यावयवार्थवत्वस्यानुमानेन तस्यैव प्रमाणत्वात् । अत एव काक्ष इति बहुव्रीहौ कापथ्यक्षया इत्यनेन षच्प्रत्ययान्तस्यार्थवत्वेन कादेशः सिद्ध्यति, समुदायावयवत्वे तु अक्षशब्दस्यानर्थकतया कादेशानापत्तिः। न च प्रतिपदोक्तपरिभाषया कुगतिप्रादय इति विहितसमासे एव कोः तत्पुरुषेऽचि इत्यस्य प्रवृत्या समासान्तरे दोषाभावेन तत्पुरुषे

1. प्रौ. म. 5.4.68 ।

इत्यस्य चरतार्थ्यायात्र प्रकरणे प्रतिपदोक्तपरिभाषायाः प्रवृत्तिकल्पनात्। उत्तरपदावयवत्वादेव अन्तरीपमित्यत्र द्व्यन्तरूपोपसर्गेभ्योऽपि ईत् इत्यनेनार्थवदपशब्दमादाय ईदादेशः सिद्ध्यति। इद्विधानसामर्थ्यादर्थवत्परिभाषाया अपरवृत्तिकल्पनन्तु न युक्तम्। सामर्थ्यात् प्रवृत्तिकल्पनापेक्षयोत्तरपदावयवत्वस्वीकारस्यैवौचित्यादिति वदन्ति।[1]

अत्र समासान्तानां समासावयवत्वमेव इति सभापतिशर्मोपाध्यायानामपि मतम्। तन्मतानुसारम् अन्तः इति सूत्रे भाष्ये उत्तरपदस्यान्तोदात्तत्वपक्षे अनृचः इत्यत्र अन्तोदात्तत्वस्य असिद्धिरूपो दोषः तत्रोक्तः। यदि समासान्तानां समासावयवत्वं न स्वीक्रियते उत्तरपदावयवत्वे च शब्दाकारस्य उत्तरपदावयवतया उदात्तत्वं सिद्ध्यति। तेन प्रोक्तभाष्यस्यासङ्गतिः स्यात्। द्वितीयविचारं प्रस्तुवन्तः ते आहुः यत्- उत्तरपदावयवत्वे सति अकारान्तोत्तरपदो द्विगुस्त्रियामिष्टः इति वार्तिके उत्तरपदग्रहणस्येदमेव फलं यत् पञ्चराजमित्यत्र स्त्रित्वाभावस्य वारणं भवितुं शक्यते, अतः तत्सत्त्वेऽपि स्वरूपाणामेकशेष एकविभक्तौ इति सूत्रभाष्यस्यासङ्गति अनिवार्य स्यात्। ऋक् च ऋक् च इति ऋचौ इत्यत्र विरूपाणामपि समर्थानामितिवचनेन एकशेषः सिद्ध्यति। अतः भाष्यकारेण यदुक्तम् एकशेषानापत्तिः तत् आपत्तिरूपदोषस्यासङ्गतिः स्यात्। यदि समासान्तानां समुदायावयवत्वं स्वीक्रियते तदा ऋचः इत्यस्यानर्थकतया विरूपाणामपि समर्थानामिति वचनस्य प्राप्तिरेव नास्ति, अतो हेतोः असङ्गतेरापत्तिः नोदेति। अपरं तथ्यं समुद्घाटयन्तः ते इत्थं कथयन्ति यत्- स्वरूपाणामेकशेष एकविभक्तौ इत्यनेन अर्थवत्तामेव एकशेष इत्यत्र किमपि प्रमाणं नास्ति, यतः व्याप्यत्वेन समुदितार्थवत्वेन अवयवार्थत्वस्य विद्यमानेऽपि अनुमितस्य तस्य स्वरूपाणामितिवाक्यार्थे प्रवेशः न सम्भवति । अतः अनर्थवतामेवैकशेष इति वक्तुं न शक्यते। यदि एवम् अनर्थकस्यापि एकशेषः स्वीक्रियते तदा तेन अर्थबोधो न स्यादिति वक्तुं न शक्यते । यतः यः शिष्यते सः लुप्यमानार्थाभिधायीतिन्यायेन तद्बोधकत्वमुपपद्यत एव इति।[2]

नागेशभट्टस्तु एवं सिद्धान्तयति यत्- अलौकिकविग्रहवाक्ये समाससंज्ञासमकालमेव समासान्ताः भवन्तीति। यदि पूर्वं समासान्ते तत्सन्नियोगशिष्टात् आद्युदात्तत्वे तदैव वाक्यतापन्ने पूर्वस्य निघाते च कृते पूर्वपदस्य उदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरस्याप्रवृत्तौ टचश्चित्करणं व्यर्थमिति वक्तुं न शक्यते। यतः टचश्चित्करणसामर्थ्येन समासान्तविधौ आद्युदात्तश्च इति न सम्वन्ध्यते इति ज्ञाप्यते, अस्मादेव हेतोः **समृद्धापूर्यस्य समृद्धपुरो राजा इत्यादौ पूर्वपदप्रकृतिस्वरः सिद्ध्यति।**[3]

नागेशभट्टेनेदमप्युक्तं यत् द्वित्रिभ्यामिति सूत्रस्थं भाष्यमेकदेशि एव । यस्मिन्निदमुक्तं यत् समासे कृते समासान्ताः भवन्ति । नागेशभट्टेन समासान्तः कुत्र

1. प्रौ, म. 5-4-68 ।
2. प्रौ,म. 5-4-68 ।
3. 5-4-68 सूत्रे शेखरः।

प्रवर्त्तते इति विषये नैजं मतं एवम् उट्टङ्क्यते यत्- स च समासान्तः बहु जस् गोमत् जस् इत्यवस्थायाम् अलौकिकविग्रहवाक्ये सुपः परत्वादेव भवति। यदि ततः पूर्वं समासान्तः प्रवर्त्तेत तदा वाच्यार्थविरोधः स्यात्, यतो हि सुप्रतिहतसमासार्थं नोपलभ्यते किन्तु तद्विशिष्टमेव। यद्यत्र एवमाशङ्क्येत यत्- तद्विशिष्टमेव समासार्थं स्वीक्रियेत तदा सुवन्तत्वाभावेन सुवन्तात् तद्धित इति सिद्धान्तविरोधः प्राप्नोति इति वक्तुं न शक्यते। यतः तेषामर्थाभावेन परिपूर्ण-पदमितितन्मूलभूतन्यायस्यात्र विषयः नास्ति, अस्मादेव हेतोः पुंयोगादाख्यायामिति सूत्रे भाष्ये इदमुक्तं यत्- अत्यन्तस्वार्थिकानां सुवुत्पत्तेः प्रागेव उत्पत्तिः भवति। नागेशेनात्र विषये विचारान्तरमेवमुक्तम् यत्- समासान्तप्रकरणे ङ्याप्कृसूत्रस्यापि सम्बन्धः नास्ति, यतः तस्यामवस्थायां वाक्यस्य प्रातिपदिकत्वमेव नास्ति, सुवुत्पत्तिकाले एव विरोधाभावात् तत्पूर्वभागस्य समाससंज्ञा जायते। समासान्तस्य च तद्वाक्यावयवत्वेन समासग्रहण एव समासान्तस्य ग्रहणात् बहुकुमारीक इत्यादौ उपसर्जनस्त्रीप्रत्ययान्तस्य प्रातिपदिकत्वाभावात् ह्रस्वत्वं न भवति। कप्प्रत्ययस्तु ह्रस्वादन्तरङ्गतरः वर्त्तते। तादर्थ्यात् ताच्छब्द्यं येषां पदानां समासः न तावत्तेषामन्यद् भवति, कपं तावत्प्रतिक्षते इति भाष्येण एवंभूतार्थस्य स्पष्टमभिधानं दृश्यते। एवं बहुविधाः विचाराः समासान्तमुद्दिश्य नागेशेन प्रवर्त्तिताः।[1]

सङ्क्षेपतोऽत्र समासान्तस्वरूपमालक्ष्य कैयटमतं प्राचीनं दीक्षितादेः मतं नवीनमिति वक्तुं शक्यते। उभययोरपि विचारयोः भाष्यालोडनं दृश्यते।

* * *

1. 5.4.68 सूत्रे शेखरे

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# अधिकरणस्वरूपविमर्शः

श्रीपीताम्बरनिराला *

**यस्यानुग्रहहेतोर्नो मतिर्भवति पुष्कला।**
**हृदि निधाय तं श्रीशं बन्धलेखे दधे धियम्।।**

**भूमिका-** वेदाख्यपुरुषे अन्तर्निहितस्य तत्त्वार्थस्य अवगतये सहायकत्वाद् व्याकरणादीनां वेदाङ्गत्वम्। उक्तं सायणाचार्येणापि- **अतिगभीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि**[1] इति। अतो वेदोपदिष्टविधीनाम् अनुष्ठेयत्वे प्राप्ते तदर्थानां प्रतिपत्तिरादौ साधनीया। अर्थप्रतिपत्तेश्च शब्दाश्रयत्वात् शब्दज्ञानस्यैव मौख्यम्। किञ्च, कृत्स्नानामपि वाग्व्यवहाराणां शब्दमूलकत्वात् शब्दस्यैव प्राथम्येन प्रतिपाद्यत्वं युज्यते। तथा चोक्तं हरिकारिकायाम् - **अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्**[2] इति। इदञ्च शब्दज्ञानं व्याकरणेतरशास्त्रं प्रतिपादयितुं नालमिति धिया **तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते**[3] इति हरिकारिकाभिव्यञ्जितं व्याकरणशास्त्रस्य प्राधान्यं **मुखं व्याकरणं स्मृतमि**[4]ति शिक्षावचनमपि परिपुष्णाति। एतदेव शब्दज्ञानं शब्दानां तत्त्वावबोधो वा पदज्ञानं पदबोध्यपदार्थज्ञानं पदार्थानाञ्च मिथोऽन्वयज्ञानमित्यादीनामपि उपलक्षणीभूतं व्याकरणेन तेषामपि प्रतिपाद्यत्वात्। अतो वैदिकलौकिकोभयविधार्थानां निराकांक्षशाब्दबोध एव लौकिकदृशा व्याकरणस्य चरमोपेयत्वेन शब्दज्ञानादीनाञ्च तं प्रत्युपायत्वमभिमन्यन्ते शब्दशास्त्रमर्मविदः। वस्तुत उपेयप्रतिपत्त्यर्थमेव उपायाः कल्प्यन्त इत्यत उपायानाम् अव्यवस्थितत्वाद् गौणत्वम् उपायस्य च मौख्यम्। उक्तं च हरिकारिकायाम्-

**उपायाः शिक्षमाणानां बालानामुपलालनाः।**
**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।**
**उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः।।**[5] इति ।

---

* सहायकाचार्यः, संस्कृतविभागः, कृष्णनगरम् राजकीयमहाविद्यालयः, कृष्णनगरम्, नादिया-712502, पं. बंगालः।

1. ऋग्वेदभाष्योपक्रमणिकायाम् ।
2. वाक्यपदीयस्य ब्रह्मकाण्डम् (कारिकासंख्या - 13 ) ।
3. वाक्यपदीयस्य ब्रह्मकाण्डम् (कारिकासंख्या - 13 ) ।
4. पाणिनीयशिक्षा (श्लोकसंख्या - 42) ।
5. वाक्यपदीयस्य तृतीयकाण्डान्तर्भूता कारिका ।

उपेयप्रतिपत्तेः प्रागवश्यमेवोपाया आदर्त्तव्या अन्यथा उपेयोच्छेदशङ्केति धिया निराकांक्षशाब्दबोधस्य कारकज्ञानाधीनत्वात् विज्ञातेऽपि कारकसामान्यलक्षणे अपादानादीनां कारकविशेषाणां प्रत्येकमपि विशिष्य ज्ञानमपेक्ष्यते । तत्र चाधिकरणत्वस्य संशीतिविषयतामभिलक्ष्य शोधपत्रेऽस्मिन् तदेव शब्दशास्त्रानुगुणोपपत्तिभिरग्रे निर्णीयते ।

**आधेयनिरूपणम्** – श्रीमद्भट्टोजिदीक्षित-प्रणीतायां सिद्धान्तकौमुद्यां कारकप्रकरणे **आधारोऽधिकरणम्** (पाणिनीय-सूत्रम् – 1.4.45) इति पाणिनीयसूत्रम् आधारीकृत्य अधिकरण-स्वरूपं व्यमर्शि। आधारस्याधिकरणवाच्यतेति सूत्रस्यास्य सामान्योऽर्थः। परन्तु वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वात् **आधारोऽधिकरणमि**[1]ति वाक्यार्थज्ञानं प्रति आधारपदार्थज्ञानस्य प्राथम्येन साध्यत्वं स्वीकार्यम्। क आधारपदार्थ इति जिज्ञासायां सत्यामपि आधारस्याऽऽधेयनिरूपितत्वात्तस्यासति प्रतिपादनेऽधिकरणस्यापि दुर्निरूप्यत्वमिति धिया आधेयपदार्थस्यैव तस्मादपि प्राथम्येन प्रतिपाद्यत्वं युज्यते। किं तर्ह्यत्राऽऽधेयम् आधेयत्वेन इति चेदुच्यते क्रियाया एवाऽऽधेयत्वेनेह ग्राह्यत्वं नेतरस्य। न च क्रियाया एवाऽऽधेयत्वेनोपदाने किं मानमिति वाच्यम्, किमर्थमिति चेदुच्यते – सूत्रमिदं हि तावत् कारकाधिकारे पठ्यते। **क्रियां करोति निर्वर्तयति वेति कारकमि**[2]ति अन्वर्थसंज्ञाबलात् क्रियाजनकस्यैव कारकत्वं प्रतिपाद्यते। तस्माद्धेतोः प्रकृतस्थलेऽत्र अधिकरणस्यापि क्रियानिर्वर्तकत्वेन कारकत्वात् क्रियां प्रति जनकत्वमधिकरणस्य सुतरामुपपन्नमिति धिया कस्याऽऽधार इति पृच्छायां क्रियाया एव उपादेयत्वमुरीकार्यम्। अतः क्रियाया आधारः अधिकरणमिति सूत्रस्यास्य सामान्यतोऽर्थः।

**कर्त्तृकर्मणोः अधिकरणत्वनिरासः** – ननु क्रियाधारस्यैवाधिकरणत्वञ्चेद् **देवदत्तो (गच्छति) इत्यत्र पच्यन्ते तण्डुला** इत्यत्र च गमन-पाकक्रिययोः यथाक्रमं देवदत्ते तण्डुलेषु च निष्ठत्वात्तत्राप्यधिकरणत्वस्यातिप्रसङ्गः। न चाधिकरणस्य कर्त्तृकर्मभ्यां पूर्ववर्तित्वेऽपि कुत्राप्यप्रवृत्तेरनवकाशत्वेन तस्यैव प्रसक्तिरिति वाच्यम्, तथात्वे कर्त्तृकर्मणोरपि तुल्यरीत्यानवकाशत्वेन कर्त्तृकर्माधिकरणानां पर्यायेण प्रवृत्तेरिति चेदत्रोच्यते नात्र साक्षात्क्रियाधारस्याधिकरणत्वमपि तु परम्परासम्बन्धेन क्रियावतोऽधिकरणत्वमिष्टम्। तस्मादेव भट्टोजिदीक्षितपादैरगादि तद्वृत्तौ-**कर्त्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञः स्यादि**[3] ति। कर्त्तृकर्मद्वारा व्यवहिताया क्रियाया आधारोऽधिकरणमित्यनुरूपमधिकरणलक्षणं भर्तृहरिणा प्रतिपादितम्–

**कर्त्तृकर्मव्यवहितामसाक्षाद् धारयत्क्रियाम्।**
**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।।**[4] इति ।

---

1. पाणिनीयसूत्रम् – (1/4/45)।
2. कारकसंज्ञाया अन्वर्थत्वसिद्धये (**कारके**) इति सूत्रभाष्ये अनुरूपमेवोक्तं भाष्यकृता पतञ्जलिना ।
3. सिद्धान्तकौमुद्याः कारकप्रकरणम् – पृष्ठसंख्या- 693 ।
4. वाक्यपदीयस्य तृतीयकाण्डस्य साधनसमुद्देशीया कारिका। संख्या – 148 ।

तेन देवदत्तो गृहे वसति इत्यादिस्थले देवदत्तसमवेता वासक्रिया संयोगाख्यपरम्परा-सम्बन्धेन गृहनिष्ठा। अतो गृहस्य क्रियाधारत्वादधिकरणत्वम्।

**क्रियास्वरूपविमर्शः** - अत्रेदं विचारपदवीमधिरोहति यत् कर्त्तृकर्मनिष्ठत्वेन क्रियाया आधारस्य अधिकरणत्वं स्वीक्रियते। तथा सति क्रियायाः कर्त्तृकर्मनिष्ठत्वमेवावश्यं विवेच्यम्। तत्पूर्वञ्च क्रियास्वरूपमपि नितरां निरूपणीयं यतोहि सत्यामेव निरूपितायां क्रियायां साक्षात्क्रियां धारयत आधारस्यापि निरूपणं सुशक्यं स्यात्। तथाहि **"भूवादयो धातवः"** इति सूत्रे अद्रव्यार्थस्य क्रियावाचिनो धातुसंज्ञा विधीयते पाणिनिना। तेन धातूनां क्रियावाचकत्वं सिद्धम्। सा क्रिया अद्रव्यस्वरूपा धातुवाच्यत्वाच्च धात्वर्थभूता व्यापाररूपेण परामृश्यते। ननु क्रियायाः व्यापाररूपेण परामर्शे किं मानमिति चेदत्र वैयाकरणभूषणकारिकायां श्रीमत्कौण्डभट्टपादैः प्रणीता कारिका एव प्रामाण्यं भजते-

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्॥**[1] इति।

**क्रियाया व्यापारार्थत्वप्रतिपादनम्**- व्याकरणनिकाये शाब्दिकैः धातवो न केवलं क्रियावाचकत्वेन स्वीक्रियन्ते। तेषां नये तावत् धातुभ्यः अर्थान्तरस्यापि प्रतीतिर्जायते इति प्रस्तुतयानया कारिकया विज्ञायते। अत्र **फलव्यापारयोर्धातुः** इत्यत्र कारिकांशेन धातुना फलस्य व्यापारस्य च बोधो जायते। व्यापारो नामात्र भावनाभिधा साध्यत्वेनाभिधीयमाना क्रियैव परामृश्यते। तथाहि निगद्यते श्रीमत्कौण्डभट्टपादैः- **व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया**[2] इति। वाक्यपदीयेऽपि निगद्यते भर्तृहरिपादैः -

**यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।**
**आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते॥**[3] इति।

किञ्च, क्रियाया व्यापारत्वे मानान्तरं तावत् देवदत्तः पचतीत्यत्र फूत्कारत्वाधः-सन्तापनत्वयत्नत्वादीनाम् अवान्तरव्यापाराणां सत्त्वेऽपि पुष्पसमूहे माल्यमिव एकत्वबुद्ध्या क्रियाया एव प्रतीतिर्जायते। तेनात्र क्रिया इत्युक्ते सावश्यमेव पूर्वापरीभूत-व्यापाररूपावयवसमूहात्मना वाच्या। अतः क्रिया व्यापारस्वरूपैव प्रतीतिगोचरतां लभते इति प्रमाणितम्। उक्तमपि आचार्यभर्तृहरिपादैः -

**गुणीभूतैरवयवैः समूहः क्रमजन्मनाम्।**
**बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥**[4] इति।

क्रियेयं पुनः असत्त्वरूपतामादाय तिङ्पदैरभिधीयमाना साध्यत्वेन परामृश्यते तथा

1. वैयाकरणभूषणसारस्य धात्वर्थप्रकरणे द्वितीया कारिका।
2. वैयाकरणभूषणसारः - पृष्ठसंख्या - 9।
3. वाक्यपदीयस्य तृतीयकाण्डस्य साधनसमुद्देशीया कारिका। संख्या - 148।
4. वाक्यपदीयस्य तृतीयकाण्डस्य साधनसमुद्देशीया कारिका। संख्या - 148।

सत्त्वस्वरूपा सती नामभिरभिधीयमाना सिद्धतया वाच्यतां लभते। तस्मादेव निगद्यते-

**सत्त्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते ।**
**असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते ॥**[1] इति ।

**क्रियाया आधारविमर्शः** - इदानीं सा व्यापाराभिधा क्रिया किमाश्रितेति विचार्यते। तथाहि **आश्रये तिङः स्मृता** इति कारिकांशेन व्यापाराभिधाया क्रियायाः आश्रयस्तावत् तिङ्। तिङो हि कर्तृकर्मणोः शक्तिः **लः कर्मणि च भावे चाकर्मकेभ्यः**[2] इत्यभिधानात्। इदानीं तावत् आश्रयाश्रितयोः द्विसंख्यकत्वात् यथासंख्यन्यायेन व्यापाराश्रयः कर्ता फलाश्रयश्च कर्म विक्लित्त्यादि। ननु कर्मैव व्यापाराश्रयस्तथा कर्ता फलाश्रयो भवतु, अनेनापि पथा यथासंख्यन्यायस्य सुवचत्वादिति चेदुच्यते- कर्तैव व्यापाराश्रयो भवितुमर्हः कर्म च फलाश्रयः, **कर्तुरीप्सितं कर्म**[3] इति सूत्रे तावत् व्यापारस्य कर्तृनिष्ठत्वेन फलस्य च कर्मनिष्ठत्वेन निर्णीतत्वात्। तस्मात् कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वं कर्मत्वमिति प्रतिपाद्यते। अतः व्यापाराख्याया क्रियाया कर्तैवाश्रयः न कर्म। किञ्च, वैयाकरणैस्तावत् व्यापारमुख्यकशाब्दबोधस्य सिद्धान्तित्वात् कर्मापेक्षया व्यापारस्यैव विशेष्यत्वेन मौख्यं प्रतिपाद्यते **फले प्रधानं व्यापारः** इति कारिकांशेन। तिङर्थभूतः कर्त्ता च व्यापारे आश्रयत्वसंसर्गेणान्वेति तेन व्यापाराश्रयः कर्त्तेत्युच्यते।

**कर्मणः क्रियाधारत्वनिरासः** - इदानीमत्रेदं विचार्यं यद् क्रिया इत्युक्ते धात्वर्थभूतव्यापारस्यैव परामर्शश्चेद् कर्त्तुरेव तदाधारत्वेन प्रसिद्धेः तत्रैवाधिकरणत्वं प्रसज्येत, कर्मणस्तु व्यापाररूपक्रियाश्रयत्वाभावात् फलाश्रयत्वाच्चाधिकरणत्वस्याप्रसक्तिः। तेन **पाकशालायां देवदत्तः स्थाल्यां तण्डुलान् पचति** इत्यत्र देवदत्तरूपकर्त्तरि पाकानुकूलव्यापारस्य सद्भावात् संयोगाख्यपरम्परासम्बन्धेन देवदत्ताश्रयभूतायाः पाकशालाया नितरामधिकरणत्वं तन्निबन्धना च सप्तमी उपपद्येत, तण्डुलानां तु तदभावात् परम्परासम्बद्धायाः स्थाल्यास्तु नाधिकरणत्वं न च तन्निबन्धना सप्तमीत्यतः **आधारोऽधिकरणम्** (पाणिनीय-सूत्रम्- 1.4.45) इत्यस्य कर्मद्वारकक्रियाधारस्य सर्वथाप्रसिद्ध्या लक्ष्यैकदेशवृत्तित्वेनाव्याप्तिदोषदुष्टत्वम्[4]।

ननु देवदत्तः स्थाल्यां तण्डुलान् पचति इत्यत्र विक्लित्तिरूपक्रियायाः कर्मभूतेषु तण्डुलेषु सत्त्वात् कथं तत्र नाधिकरणत्वमिति चेदुच्यते नात्र विक्लित्तौ क्रियात्वं तस्याः कर्त्तृमात्रनिष्ठत्वाद् गुणरूपेण सिद्धत्वाच्च। व्यापारत्वं च पुनः पदान्तरसमभिव्याहाराप्रयोज्य-साध्यत्वप्रकारक-प्रतीतिविषयत्वम्। विक्लित्तेस्तु पदान्तरसमभिव्याहार-प्रयोज्य-सिद्धत्व-प्रकारक-प्रतीतिविषयत्वात् मृदुविशरदत्वेन गुणरूपेण सिद्धत्वाच्च तस्याः क्रियात्वेन

1. वाक्यपदीयस्य तृतीयकाण्डस्य साधनसमुद्देशीया कारिका। संख्या- 148 ।
2. पाणिनीयसूत्रम्- (3/4/69)।
3. पाणिनीयसूत्रम्- (1/4/49)।
4. लक्ष्यैकदेशवृत्तित्वमव्याप्तित्वमिति लक्षणगतत्रिविधदोषेषु अव्याप्तिरन्यतमा।

स्वीकारेऽन्यथासिद्धिः सुस्पष्टा। अतः विक्लित्त्यादि-फलाश्रयीभूत-तण्डुलादीनां संयोगाद्याख्य-परम्परासम्बन्धेन आश्रयीभूत-स्थाल्यादेः नाधिकरणत्वमिति ज्ञातव्यम् ।

**क्रियायाः धात्वर्थत्वस्वीकरणे मानम्-** ननु कर्त्तृद्वारकक्रियाधारस्यैव अधिकरणत्वञ्चेत् स्थाल्यां तण्डुलान् पचति इत्यादिषु कथमधिकरणत्वप्रसक्तिः? किञ्च, भाष्यादिष्वपि प्रोक्तरूपेण क्रियाधारस्य अनिर्णयात् कथं तर्हि कर्मद्वारकाधारस्याधिकरणत्वमिति चेदुच्यते- फलाश्रयीभूतकर्मणः क्रियाधारत्वेनाप्रसिद्ध्या तस्याधिकरणत्वं कथमपि न भवति, प्रत्युत कर्त्तुरेव क्रियाधारत्वेन प्रसिद्धेः तदाधारस्यैवाधिकरणत्वम्। अत्रेदमवगन्तव्यं यद्यप्यत्र कारकाधिकारबलात् क्रियाधारस्यैव परम्परादिसम्बन्धेनाधिकरणत्वमुच्यते तथापि क्रियापदेन व्यापारार्थस्वीकारेणासत्यां गतार्थतायां क्रियाशब्दस्य व्यापरारूपो मुख्यार्थो परित्यज्यते इत्यतोऽत्र विवक्षितार्थप्रतिपत्तये मुख्यार्थस्य बाधेन तत्सम्बन्धिनः अर्थान्तरस्य ग्रहणं लक्षणया क्रियते ।

**लक्षणाश्रयेण क्रियायाः धात्वर्थत्वप्रतिपादनम्-** लक्षणा नाम शब्दव्यापारो येन शक्यार्थपरित्यागे सति तात्पर्यार्थोपपत्तये शक्यार्थसम्बद्धस्य अर्थान्तरस्य ग्रहणं क्रियते। तथाहि विश्वनाथाचार्यपादैः लक्षणायाः स्वरूपं निरणायि स्वप्रणीतायां कारिकावल्ल्यां - **लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः**[1] इति। अस्मिन् लक्षणे एव नागेशाचार्यपादानामपि स्वारस्यात् तैरप्यनुरूपमेव लक्षणास्वरूपं निर्णीतम्। **आधारोऽधिकरणम्** (पाणिनीय-सूत्रम्-1.4.45) इत्यत्र कर्त्तृकर्मद्वारकक्रियाधारस्य अधिकरणत्वम् इत्यत्र क्रियापदेन धात्वर्थो ग्राह्यः। धात्वर्थश्च **फलव्यापारयोर्धातुः** इत्येवं कौण्डभट्टीय-कारिकानुसारेण फलं व्यापारश्च। यद्यपि पूर्वापरीभूत-व्यापारसमूहस्यैव क्रियात्वेन परामर्शस्तथापि व्यापाररूपस्वार्थापरित्यागद्वारा क्रियापदमत्र लक्षणालक्षण-शब्दव्यापारेण स्वशक्यार्थसम्बद्धं फलमपि प्रत्याययति। सम्बन्धश्चात्र स्वबोधकपदबोध्यत्वेन सामानाधिकरण्यम्। तेनात्राजहत्स्वार्थलक्षणायाः स्वीकारद्वारा क्रियापदेन सामानाधिकरण्येन धात्वर्थरूपस्यार्थस्य लाभात् फलव्यापारयोश्च धात्वर्थत्वेन प्रसिद्धेः न कापि क्षतिः। तस्मात् कर्त्तृकर्मद्वारा तन्निष्ठधात्वर्थीभूत-फलव्यापारान्यतराधारस्य अधिकरणत्वमिति परिष्कृतमधिकरणलक्षणं सङ्गच्छते। इयं लक्षणा उपलक्षणशब्देनापि प्रसिद्धिं गता। उपलक्षणं तावत् स्वबोधकत्वे सति स्वेतरबोधकत्वम्। उभयथापि गतार्थापत्त्या न कापि हानिः।

**क्रियायाः धात्वर्थत्वे प्रमाणप्रदर्शनम्-** ननु प्रोक्तव्याख्यायाः स्वीकरणे किं मानमिति चेदुच्यते यत् एतादृशीमसङ्गतिं मनसि निधायैव आचार्यैः नागेशपादैः स्वप्रणीतपरमलघुमञ्जूषायां विभक्त्यर्थनिरूपणवेलायाम् अधिकरणलक्षणं निगदितं- **कर्त्तृकर्मद्वारक-फलव्यापाराधारत्वम् अधिकरणत्वमिति**[2] एतेन प्रागुक्तव्याख्यानप्रकारस्य

1. भाषापरिच्छेदस्य शब्दखण्डीया कारिका - 82, (पृष्ठम् - 442) ।
2. परमलघुमञ्जूषायां कारकनिरूपणप्रकरणे, पृष्ठम् - 183

वैयाकरणाचार्य-मतानुमतत्वेन तत्राप्रामाणिकत्वदोषः परिहीयते। वाक्यपदीयस्य तृतीयकाण्डे साधनसमुद्देशे अधिकरणाधिकारे श्रीमद्रघुनाथशर्मप्रणीतायाम् अम्बाकर्त्रीटीकायां निगद्यते- **शास्त्रे त्वस्मिन् कारकप्रकरणात् क्रियाऽऽक्षेपे क्रियायामेव असाक्षात् धारणरूपेणोपकारविशेषेण अधिकरणसंज्ञा व्यवतिष्ठते। तत्र व्यापाररूपा क्रिया कर्त्तरि, फलरूपा च कर्मणि व्यवतिष्ठते** इति।[1] तेन पाकशालायां देवदत्तः तण्डुलान् पचति इत्यत्र धात्वर्थीभूतपाकानुकूलव्यापारस्य समवायसम्बन्धेन देवदत्तनिष्ठत्वात् देवदत्तस्य च संयोगाख्यपरम्परासम्बन्धेन पाकशालानिष्ठत्वात् तस्याः अधिकरणत्वम्। एवञ्च स्थाल्यामित्यत्रापि धात्वर्थीभूतस्य विक्लित्तिरूपफलस्य कर्मभूतेषु तण्डुलेषु विद्यमानत्वात् तण्डुलानाञ्च संयोगाख्यपरम्परासम्बन्धेन स्थाल्यां निष्ठत्वात् तत्राप्यधिकरणत्वं सङ्गतम्।

वैषयिकाभिव्यापकौपश्लेषिकभेदेनाधिकरणस्य त्रैविध्यं प्रथितम्। मोक्षे इच्छास्ति, तिलेषु तैलम्, कटे आस्ते इत्यादीनि क्रमेणोदाहरणान्यवगन्तव्यानि। प्रागुक्तोदाहरणेषु सर्वत्र **सप्तम्यधिकरणे** (पाणिनीय-सूत्रम् - 2.3.36) इति सूत्रेणाधिकरणसंज्ञायां सप्तमीविभक्तिर्विधीयत इत्यलं विस्तार्य ।

## सहायकग्रन्थसूची


1. **वैयाकरणसिद्धान्तकौमुदी बालमनोरमा-तत्त्वबोधिनीसहिता** (प्रथमो भागः)- गिरिधरशर्मपरमेश्वरानन्दशर्मभ्यां संशोधिता सम्पादिता, देहलीस्थमोतीलालबनारसीदास इत्यतः 2010 ख्रीष्टाब्दे पुनः प्रकाशिता।
2. **वैयाकरणभूषणसारः** (दर्पणव्याख्यासंवलितः)- चन्द्रिकाप्रसादद्विवेदि-सम्पादितः, देहलीस्थ-चौखम्बासंस्कृतप्रतिष्ठानतः 2005-ख्रीष्टाब्दे प्रकाशितः
3. **वैयाकरणभूषणसारः** (धात्वर्थपर्यन्तः) - डॉ. भीमसेनशास्त्रिसम्पदितः, देहलीस्थभैमी-प्रकाशन इत्यतः 1992 ख्रीष्टाब्दे प्रकाशितः।
4. **लघुशब्देन्दुशेखरः** (कारकप्रकरणम्) - डॉ. तेजपालशर्मसम्पादितः, वाराणसीस्थ-सम्पूर्णानन्द-संस्कृतविश्वविद्यालयतः 2002-ख्रीष्टाब्दे प्रकाशितः।
5. **पाणिनीयशिक्षा** - शिवराज-आचार्य-कौण्डिन्न्यायन-सम्पादिता, वाराणसीस्थ-चौखम्बा-विद्याभवनतः प्रकाशिता।
6. **महाभाष्यम्** (प्रदीपोद्योतटीकाद्वयोपेतम्) - श्रीमद्भार्गवशास्त्रिमहोदयेन संशोध्य सम्पादितम्, देहलीस्थचौखम्बासंस्कृतप्रतिष्ठानतः 1987-ख्रीष्टाब्दे प्रकाशतिम् ।
7. **परमलघुमञ्जूषा** (वंशीधरमिश्रकृतव्याख्यासंवलिता) - आचार्यश्रीनिवासशर्मणा सम्पादिता, देहलीस्थचौखम्बासंस्कृतप्रतिष्ठानतः 2006-ख्रीष्टाब्दे प्रकाशिता ।
8. **वाक्यपदीयम्** (तृतीयं काण्डम्) - पण्डितश्रीरघुनाथशर्मणा सम्पदितम्, सम्पूर्णानन्दसंस्कृत-


1. अम्बाकर्त्रीटीका, पृष्ठम् - 375

विश्वविद्यालयतः 1997-ख्रीष्टाब्दे प्रकाशितम् ।

9. **भाषापरिच्छेदः** (न्यासिद्धान्तमुक्तावलीसहितः) - पञ्चाननभट्टाचार्यशास्त्रिणा सम्पादितः, कलिकातातः 1369-वङ्गाब्दे प्रकाशितः।

10. **वैयाकरणसिद्धान्तकौमुदी** (कारकप्रकरणम्) - अयोध्यानाथसान्यालशास्त्रिणा सम्पादिता, कलिकातास्थ-संस्कृतपुस्तकभाण्डार इत्यतः 1418-वङ्गाब्दे प्रकाशिता ।

11. **व्याकरण दर्शनेर इतिहास** - गुरुपदहालदारमहाभागेन विरचितः, कलिकातास्थ-संस्कृत-बुक्-डिपो इत्यतः 2006-ख्रीष्टाब्दे पुनः मुद्रयित्वा प्रकाशितः ।

12. **काशिका न्यासपदमञ्जरीसहिता** (द्वितीयो भागः)- जयशङ्करत्रिपाठि-सुधाकरमालवीयाभ्यां सम्पदिता, काशीस्थ-तारा-बुक्-एजेंसी इत्यतः 1984-ख्रीष्टाब्दे प्रकाशिता।

* * *

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# व्याकरणशास्त्रस्य इहामुष्मिकोभयफलप्रसाधकत्वम्

डॉ. मनोजकुमारद्विवेदी*

**"शासनात् शंसनात् शास्त्रमित्यभिधीयते"** इति वचनात् शास्त्रविधिना जीवनस्य दिनचर्या भवेत् । विधिनिषेधकाभ्यां शास्त्रस्य प्रवृत्तिर्जायते। यथा- **"स्वर्गकामो यजेत"** इति विधिशास्त्रम्, **"मा हिंस्यात् सर्वभूतानि"** इति निषेधशास्त्रम्। यथा दर्शनशास्त्रेण अनेकेषु एकत्वम् असत्सु सत्तत्त्वस्य अन्वेषणं परिदृश्यते तथैवाऽत्र व्याकरणस्याऽपि विधिनिषेधप्रकियाभेदेन प्रवृत्तिर्भवति तथा च असाधुशब्देभ्यः साधुशब्दविषयकज्ञानकरणम् इति बुधैः प्रतिपाद्यते।

भारतीयपरम्परायां द्वादशदर्शनानां (षड् आस्तिकदर्शनानि षड् नास्तिकदर्शनानि) चर्चा भूयसी वर्तते। क्वचिद् ग्रन्थे व्याकरणस्याऽपि दर्शनत्वेन परिगणना वर्तते। किन्तु प्रक्रियाप्रधानं व्याकरणमिति मन्यमानानां व्याकरणस्य दर्शनत्वविषये अनाश्वासकल्पो वर्तते। तत्र व्याकरणरहस्यविद्भिर्वाक्यपदीयकारादिभिः व्याकरणस्य दर्शनत्वपक्षः स्वप्रतिपादनवैशिष्ट्येन बहुधा परिपोषितः।

व्याकरणस्य दर्शनत्वं "अइउण्" इत्यादिचतुर्दशसूत्राणां व्याख्यानप्रसङ्गे नन्दिकेश्वरकृतकारिकायां समवलोक्यते। तथा हि "अइउण्" इत्यत्र अ इत्यनेन निर्गुणपरमेश्वरः, इ इत्यनेन मायामाश्रितः, उ इत्यनेन व्यापकः सगुणः ईश्वरः, ण् इत्यनेन आसीत् । एतेन मायासम्बलितं ब्रह्मबोधकत्वं दर्शनत्वमत्र प्रतिपाद्यते। तथा च उच्यते-

**नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।**
**उद्धर्तुकामः सनकादिसिद्धान् एतद्विमर्शे शिवसूत्रजालम्।।**

अनेन प्रमाणेन सनकादीनाम् उद्धरणेच्छया व्याकरणस्य दर्शनत्वं महेश्वरेण अभिव्यञ्जितम्। उद्धारं तु ज्ञानं विना भवितुं नाऽऽर्हति। **"तमेव विदित्वाऽति मृत्युमेति"** इति श्रुतेः। तद् ज्ञानं दर्शनजन्यमेव। अतः मोक्षोपयोगिनः व्याकरणस्य दर्शनत्वप्रतिपादनाऽवसरे भास्कराचार्यः प्रशंसां करोति-

---

*सहायकाचार्यः, व्याकरणविभागः, श्रीरामसंस्कृतमहाविद्यालयः, जानकीकुण्ड, चित्रकूट, सतना (म.प्र.)।

**यो वेद वेदवदनं सदनं हि सम्यग्**
**ब्राह्म्याः स वेदमपि वेदकिमन्यशास्त्रम् ।**
**यस्मादतः प्रथममेतदधीत्यधीमान्**
**शास्त्रान्तरस्य भवति श्रवणेऽधिकारी।।**[1]

अपि च उच्यते- छान्दोग्योपनिषदि **"वेदानां वेद"** इति पदमञ्जरीकारेण यथा-

**उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।**
**प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्।।**
**रूपान्तरेण ते देवा विचरन्ति महीतले।**
**ये व्याकरणसंस्कारपवित्रमुखाः नराः।।**[2]

वाक्यपदीये व्याकरणस्य दार्शनिकतत्त्वानि प्रतिपादितानि। अस्मिन् प्रसङ्गे पुण्यराजः भर्तृहरिसम्मतानि दार्शनिकतत्त्वानि ददर्श। वैयाकरणानां मते अखण्डैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यं प्रतिभैव वाक्यार्थः अभ्यासश्च सम्बन्धः इति पदवाप्तिपक्ष-दूषणपरं टीकाकारो व्यवस्थापयति। तत्र अम्बाकर्त्रीटीकायां पण्डितप्रवरैः महामन्यैः श्रीरघुनाथपाण्डेयमहोदयैः वैयाकरणानां मते अखण्डैकोऽनवयवः शब्दः स्फोटलक्षणो वाक्यं प्रतिभैव वाक्यार्थः अभ्यास एव सम्बन्धः इति पदं शब्दः पदानां संघातो वाक्यमिति वादिपक्षं दूषयित्वा अखण्डवाक्यशब्दः इति व्यवस्था प्रतिपादिता। इदमेव तत्त्वं दार्शनिकानाम्। उक्तञ्च लघुमञ्जूषायां नागेशभट्टेन-

**"तत्त्वमस्यादिवाक्याऽखण्डार्थेन शुद्धेनाऽपि ब्रह्मणः"।**

**"आध्यासिकं तादात्म्यम्"।**[3]

तत्रैव रत्नप्रभाटीकायां तात्पर्यविषयीभूतार्थबोधकत्वमेव वक्तव्यम्। तथा च वेदान्तवाक्ययोः उभयोरपि इति नित्यत्वेन तादात्म्यं सम्भवः" इति व्याख्यातं श्रीसभापतिशर्मोपाध्यायविद्वद्वरेण्यैः। अपि च स्फोटनिरूपणो सिद्धान्तः एव सिद्धान्तितः, अखण्डस्फोटलक्षणः एकः शब्दो वाक्यं प्रतिभा वाक्यार्थः अभ्यास एव सम्बन्धः इति लब्धमिति। अत एव पुण्यराजकृत व्याख्यया, अम्बाकर्त्री टीकया च निश्चीयते यत् त्रीणि दार्शनिकतत्त्वानि उपनिबद्धानि सन्ति। तच्च दार्शनिकतत्त्वत्रयं सौविध्येन सौलभ्येन च बोधयितुं न शक्यते इति तदुपयोगितायाः पदस्य पदार्थस्य प्रकृतिप्रत्यययोः तदर्थयोश्च उपसर्गनिपातकर्मप्रवचनीयादीनामपि निरूपणं वाक्यपदीयकारः द्वितीयकाण्डे चकार इति तु नाप्रासङ्गिकम् ।

1. भास्कराचार्यः- सिद्धान्तशिरोमणिः मङ्गलश्लोकः।
2. पदमञ्जरी- अथशब्दानुशासनम्
3. नागेशभट्टः - लघुमञ्जूषा

अन्येषां शास्त्राणां लौकिकं पारलौकिकं वा प्रयोजनं दृश्यते परञ्च व्याकरणस्य उभयविधप्रयोजनम् अवश्यमेव विद्यते। व्याकरणशास्त्रस्य शब्दशाधुत्वलक्षणं लौकिकप्रयोजनं तथा च महता देवेन वाग्ब्रह्मणा सह सायुज्यम् इति पारलौकिकप्रयोजनम् अपि भवति। अत एव व्याकरणशास्त्रस्य प्रक्रियापक्षं दार्शनिकपक्षं च इति उभयविधिप्रयोजनं सिद्ध्यति ।

तत्र व्याकरणं नाम असाधुशब्दावधिकसाधुशब्दकर्मकपृथक्कृतिपूर्वकसाधुशब्द-विषयकज्ञानकरणम् व्याकरणम् इति अथवा व्याक्रियन्ते असाधुशब्देभ्यः साधुशब्दाः पृथक्क्रियन्ते येन तद् व्याकरणम् इति व्युत्पत्तेः। येन शास्त्रेण शन्दानां पदानां च विश्लेषणं संश्लेषणं च क्रियते तद् व्याकरणमिति कथ्यते। अत एव उच्यते-

**यद्यपि बहुनाधीषे तथापि पठ पुत्र व्याकरणम् ।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत्॥**

तत्र व्याकरणस्य साक्षात् फलं शब्दानाम् अनुशासनमेव। तदुक्तं पतञ्जलिना महाभाष्ये **"अथ शब्दानुशासनम्"** इति। अनेन ज्ञायते यत् शब्दानाम् अनुशासनम् भवति इदमेव अस्य शास्त्रस्य साक्षात् फलम्। शब्दप्रयोगो तु अनादिकालतः एव परञ्च लोकाश्रयत्वात् स्वतन्त्रः अव्याकृतैव च आसीत्। अत एव उच्यते- वाग्वै पराच्यव्याकृता अवदत्। ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुर्वन्ति। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। अतः प्रथमः शब्दानुशसनपरिष्कर्ता इन्द्र इति। अनन्तरं तद् व्याकरणं इन्द्रो भरद्वाजाय, भरद्वाजः ऋषिभ्यः, ऋषयः ब्राह्मणेभ्यः प्रोचुः।

इमां व्याकरणपरम्परां सम्प्रवर्द्धनाय महर्षिपाणिनिः सूत्राष्टाध्यायीं रचयामास। तत्र महर्षिकात्यायनः वार्तिकसूत्राणि रचितवान्। तत्र च पतञ्जलिः महाभाष्यं रचयामास।

इदानीं समग्रतया उपलभ्यमानं पाणिनीयं व्याकरणशास्त्रं श्रुतिमूलकत्वाद् अभ्यर्हितं च भवति। पाणिनिव्याकरणं हि श्रुतिमूलकम्। यतो हि श्रुतिरूपाणि "अइउण्" इत्यादिचतुर्दशसूत्राणि आश्रित्य भगवता पाणिनिना प्रत्याहाराणि कल्पितानि। तानि प्रत्याहाराणि एव अवलम्ब्य पाणिनीयसूत्राणां शब्दसाधुत्वसाधकत्वं भवति। तदुक्तं श्रीनागेशभट्टेन "श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वमिति" तदेतस्य वेदाङ्गप्रधानस्य व्याकरणस्य फलं सन्ध्योपासनादिवत् महर्षिपाणिनिः न प्रोवाच पृथक्तया तत्फलं प्रयोजनं वा। किन्तु तदर्थं महामुनिः पतञ्जलिः महाभाष्यादौ वृद्धिशब्दं प्रयुक्तवान्। अतः भाष्याकारः अस्य शास्त्रस्य लौकिकालौकिकप्रयोजनानि दर्शितवान्। अत आह- **"एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति"**[1]। अनेन महाभाष्यकारवाक्येन प्रमाणीक्रियते यत् व्याकरणशास्त्रेण लौकिकालौकिकप्रयोजनानि सिद्धानि भवन्ति। अपि च **"महता देवेन नः साम्यं यथा स्यात्"**[2] इति वाक्येन अलौकिकफलमपि सिद्धम्।

अस्मिन् सन्दर्भे व्याकरणशास्त्रस्य दार्शनिकपक्षप्रस्तोतुं श्रीभर्तृहरिः

1. पतञ्जलिव्याकरणमहाभाष्यम् – पस्पशाह्निकम्
2. पतञ्जलिव्याकरणमहाभाष्यम् – पस्पशाह्निकम्

वाक्यपदीयनामकं ग्रन्थं रचयामास। अस्मिन् ग्रन्थे व्याकरणशास्त्रस्य सर्वेऽपि पक्षाः लौकिकालौकिकफलपुरस्सरं प्रतिपादिताः वर्तन्ते। अस्य प्रथमकाण्डे शब्दब्रह्मणः स्वरूपेण सह स्फोटसिद्धान्तस्य निरूपणं च वर्तते। अत एव भर्तृहरिणा उच्यते–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[1]

अतः जगतः स्वरूपपरिज्ञानाय शब्दस्वरूपपरिज्ञानमावश्यकं भवति। नैव सम्भवति अन्योपायेन शब्दस्वरूपपरिज्ञानम्। अतः व्याकरणशास्त्रस्य परिशीलनम् अध्ययनञ्च परमावश्यकम्। शब्दो नित्यः भवति एतस्मात् व्याकरणशास्त्रस्य आमुष्मिकोफलप्रसाधकत्त्वं फलति। शब्दाः नित्याः तस्मादेव प्रतिक्षणं नवं नवं शब्दम् उत्पद्येयुः तदा शब्दानां ज्ञानं व्यावहारिकपक्षं प्रतिभाति।

अत एव व्याकरणशास्त्रस्य इहामुष्मिकोफलवत्त्वेन उत्तमं तप उच्यते। इहामुष्मिकोफलवत्त्वादेव शब्दब्रह्मणः प्रत्यासन्नं भवति व्याकरणशास्त्रम्। अत आह–

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः॥**[2]

अपि च महाभाष्ये उच्यते– **सोऽयमक्षरसमाम्नायो वाक्यसमाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः, सर्ववेदपुण्यफलवाप्तिश्चास्य ज्ञाने भवति । मातापितरौ चास्य स्वर्गे लोके महीयते**[3]।

अपि च सर्वोऽपि लोकव्यवहारः, तत्वावबोधश्च व्याकरणशास्त्रद्वारक एव। तथा चाह–

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते॥**[4]

यदि शब्दं न स्यात् तदा सम्पूर्णमपि जगत् मूकवत् प्रतिभाति। सर्वं जगत् अन्धकारवृत्तं स्यात्। यथा उच्यते–

**इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥**[5]

अपि च सर्व लोकव्यहारज्ञानं तत्त्वज्ञानं च शब्दानुविद्धं प्रकाशते । तथा चोक्तम्–

---

1. वाक्यपदीयम्– ब्रह्मकाण्डम् (कारिका संख्या ०१)
2. वाक्यपदीयम्– ब्रह्मकाण्डम् (कारिका संख्या ११)
3. पतञ्जलिव्याकरणमहाभाष्यम्
4. वाक्यपदीयम्– ब्रह्मकाण्डम् (कारिका संख्या १३)
5. काव्यादर्शः ०१/३४ ।

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**[1]

वाङ्मलानां चिकित्सायै च सर्वविद्यानां पवित्रं व्याकरणशास्त्रविद्या। अन्यथा कण्ठताल्वादिस्थानप्रयत्नभेदेन शुद्धोच्चारणं नैव सम्भवति । स्वरादिव्यत्ययेन च महदनिष्टं भवति, तदनिष्टदोषनिराकरणं तु शब्दशास्त्रेणैव तथा उच्यते-

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।**
**पवित्रं सर्वविद्यानाम् अधिविद्यं प्रकाशते।।**[2]

व्याकरणशास्त्रं तु इहामुष्मिकोभयफलसाधकत्वेनैव प्रकियानिर्वाहार्थं लघुभूतमुपायमाश्रित्य भगवतः आचार्यस्य पाणिनेः शास्त्रं प्रवृत्तिं भवति। अतः व्याकरणशास्त्रं आञ्जसः सरलः मार्गः भवति । तदुक्तम्-

**प्राप्तरूपविभागायाः यो वाचः परमो रसः ।**
**यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः।।**[3]

कर्मप्रधाने जगति जीवानां कृते मोक्षरूपं परमप्रयोजनं प्रधानफलम्। मोक्षप्राप्तये श्रवणमनननिदिध्यासनादीनि अनेकविधमार्गाः दर्शनादिग्रन्थेषु प्रतिपादिताः वर्तन्ते। तत्र व्याकरणशास्त्रं मोक्षसोपानेषु मध्ये आद्यस्थानं वर्तते, श्रवणमनननिदिध्यासनादेः व्याकरणशस्त्रज्ञानाधीनत्वात्। अतएव मुमुक्षूणां कृते व्याकरणशास्त्रं सरलो राजमार्गः तिष्ठति। अस्मिन् प्रसङ्गे भर्तृहरिणा उच्यते-

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षामाणानामजिह्मा राजपद्धतिः।।**[4]

एवम्प्रकारेण व्याकरणशास्त्रं लौकिकफलप्रसाधकत्त्वाद् व्यावहारिकशब्दाऽभ्युपगमो भवति तथा च अलौकिकफलप्रसाधकत्त्वाद् मोक्षसाधनीभूतस्य तत्त्वावबोधपूर्वकं अपवर्गस्य द्वारं फलति। अत एव व्याकरणं नाम इहामुष्मिकोभयफलप्रसाधकत्त्वं शास्त्रम् ।

**सन्दर्भग्रन्थाः-**

1. व्याकरणमहाभाष्यम् - महर्षिपतञ्जलिः
2. नागेशभट्टः- लघुमञ्जूषा
3. पदमञ्जरी- श्रीहरदत्तः
4. वाक्यपदीयम्- श्रीभर्तृहरिः
5. काव्यादर्शः- श्रीदण्डिः
6. सिद्धान्तशिरोमणिः-भास्कराचार्यः

1. वाक्यपदीयम्- ब्रह्मकाण्डम् (कारिका संख्या १२३)
2. वाक्यपदीयम्- ब्रह्मकाण्डम् (कारिका संख्या १४)
3. वाक्यपदीयम्- ब्रह्मकाण्डम् (कारिका संख्या १२)
4. वाक्यपदीयम्- ब्रह्मकाण्डम् (कारिका संख्या १६)

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# जैमिनीयं प्रजातन्त्रविधानम्

डॉ. सङ्कल्पमिश्रः *

पूर्वमीमांसासूत्रकर्त्ता जैमिनिरयं प्रधानतया निष्कृष्टं वेदवाक्यार्थं विविधैर्न्यायैः प्रदर्शयितुं शास्त्रमिदमारभमाणो वेदस्य वैदिकसंस्कृतेश्च लोकेन सह विद्यमानं सम्बन्धनैकट्यं क्वचिद् वैदिकैः क्वचिच्च लौकिकैरुदाहरणैरवद्योत्य लोकान् सर्वान् शिक्षयति। मीमांसाख्यायाः अस्या विद्यायाः शिक्षको महर्षिजैमिनिः। सर्वस्यापि शिक्षकस्यायं स्वभावः - यदतिगभीराणां विषयाणामवबोधनाय लौकिकोदाहरणावलम्बनं नाम। अत एव सूत्रकारः ''लोकवत्'' ''यथालोके'' ''लोकभूतेषु'' ''लोके कर्माणि वेदवत्'' इत्येवं बहुशः प्रयुञ्जानः वेदस्य लोकसाधारण्यं प्रदर्शयति। तत्र कतिपयान्युदाहरणानि ससमन्वयमुदाहरामः।

अर्थवादाधिकरणे (1.2.1) "अन्यानर्थक्यात्"[1] इति सूत्रेण "पूर्वाहुत्या सर्वान् कामानवाप्नोति" तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इत्यादि वाक्यानामप्रामाण्यमाशङ्कितम्। अग्निसिद्ध्यर्थं क्रियमाण आधाने विहिता पूर्णाहुतिः। अनयैव पूर्णाहुत्या सर्वकामावाप्तौ सत्यां बह्वायाससाध्यानि दर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादीन्याचरितुं कथं लोकानां प्रवृत्तिस्स्यात्? इमानि कर्माणि अनर्थकानि भवेयुः, तदपेक्षया एकस्यास्याप्रामाण्यमुचितम्। एवमश्वमेधयागस्यानुष्ठानेन यत्फलं मृत्युतरणब्रह्महत्यातरणरूपं तच्चेदमश्वमेधप्रकरणवेदनेनैव सम्पद्यते तर्हि तदनुष्ठाने पुरुषः कथं प्रवर्तेत? अत एतादृशं वाक्यमनर्थकम् इति पूर्वपक्षस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषस्स्यात्[2] इति। अग्निहोत्र-दर्शपूर्णमास-ज्योतिष्टोमादीनां स्वर्ग एव फलमुपदिष्टम्।

स्वर्गस्त्वामुष्मिकं फलम्, तद्गततरतमभावोऽग्निहोत्रदर्शपूर्णमासादितरतम-भावापन्नकर्मभिः सम्पद्यमानोऽपि न दृष्टिगोचरस्सः। तमिमं दृष्टिगोचरेण लौकिकदृष्टान्तेन घटयति- "लोकवत्परिमाणतः फलविशेषस्स्यात्"[3] इति। सेवातारतम्येन लोके भृत्याः

---

* सहायकाचार्यः, वेदव्याकरणविभागस्य, महर्षिपाणिनिसंस्कृत एवं वैदिकविश्वविद्यालयः, उज्जैनम् (मध्यप्रदेशः)

1. पूर्वमीमांसा 1.2.4
2. पूर्वमीमांसा 1.2.17
3. पूर्वमीमांसा 1.2

फलतारतम्यमवाप्नुवन्तीति साक्षादनुभवामः। गृहनिर्माणाय परिक्रीतेषु भृत्येषु स्नुहीसंयोजनेष्टकावहनकर्त्तारः, इष्टका संयोजनकर्त्तारः इष्टकासु भित्तिषु च चित्रकलाविधातारश्च तरतमभावेन भृत्तिमवाप्नुवन्त एकैकोऽपि ब्रवीति यदहमवाप्तव्यं सर्वमवाप्नुयामिति।

अत्र यथा सर्वशब्दस्स्वावाप्तव्यपरिमाणवाची तथैव "सर्वान् कामानवाप्नोति" इत्यत्रापि सर्वशब्दोऽवगन्तव्यः। एवं ब्रवुतो जैमिनेर्न किमपि वैशिष्ट्यं प्रतीयत इव प्रतिभायात्, किन्तु जैमिनेर्हृदयं प्रविश्य पर्यालोच्यमानेऽत्रत्यं तत्त्वं निगूढं किञ्चित्प्रतीयेत। स्वीकृतप्रजातन्त्रविधाने स्वतन्त्रभारतेऽधुना सर्वोऽपि स्वातन्त्र्यमात्मनो मन्यमानस्सहसैवान्यसमतामवाप्तुं चेष्टते, तदर्थं कलहं करोति, सङ्घं सङ्घट्टयति, धर्मघटञ्च विदधाति, शासनसूत्रं विच्छेदयितुं प्रयतत इति प्रत्यक्षं पश्यामः। तदत्र जैमिनीरनुशास्ति –"फलस्य कर्मनिष्पत्तेः"[1] इति। सनियममनुष्ठीयमानैरेव कर्मभिः फलस्य निष्पत्तिरिति नेदमप्रत्यक्षम्। फलकामनां जैमिनिर्न निरुणद्धि। सर्वेस्सर्वाणि फलानि कामयितुं प्रभुः, किन्तु तत्राधिकारी सन् फलं कामयेत। अधिकारिविशेषणेषु विद्यायास्सामर्थ्यस्य चोपदेशः। सतोरपि विद्यासामर्थ्ययोः नियामकैः प्रवर्तितः क्रमोऽपि नियतः कश्चनापेक्ष्यते। एवमधिकारिविशेषणसम्पन्नस्सनियमं कर्माणि कुर्वीत। तादृशेषु कर्मस्वनुष्ठीयमानेषु कर्मानुसारिफलमवाप्तुं सोऽधिकारी। सोमयाजिनो यादृशं फलं तादृशमग्निहोत्रमात्रानुष्ठात्रा मया लब्धव्यमितीच्छामात्रेण न तेन तल्लब्धुं शक्यम्, न चेयमिच्छापि साधीयसी। स्वतन्त्रभारते मानवमात्रस्य राष्ट्रपतिपदं राज्यपालपदं वा प्रधानमन्त्रि-पदं वा लब्धुमस्त्यधिकार इत्येतावता न सर्वैस्तल्लब्धुं शक्यम्। तत्तदौपयिकसामग्रीसम्पादनं खलु प्रथममावश्यकम्। फलकामनातः पूर्वं तत्साधनेषु कर्मसु स्वस्याधिकारोऽस्ति न वेति विचिन्तनीयम्। विचिन्तनमिदं ज्ञानात्, तत इच्छा, ततो यत्नः, ततः कर्मसम्पादनम् फलन्तु स्वत एव निष्पद्यत इति।

### अभाव-निराकरणं, तपसा विधेयम्

विषयमिमं विशदयन् जैमिनिस्तृतीयाध्यायस्याष्टमपादे सूत्रयति– "तपश्च फलसिद्धित्वाल्लोकवत्"[2] इति। ज्योतिष्टोमे दीक्षितस्य व्रतं श्रुतम् – "पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति। दीक्षावसरे ब्राह्मणेन यजमानेन पयोव्रतं कर्त्तव्यम्, राजन्येन यवागूव्रतम्, वैश्येन चामिक्षाव्रतम्। तेन तेन तस्य तस्य भक्षणं कर्त्तव्यमिति तात्पर्यम्। पय आदिव्रतेन यजमानो यद्यत्मनश्शोषणं निश्चिनुयात्तर्ह्यनुव्रतमाम्नातम्- "यदि मन्येतोपपदस्यामिति ओदनं धानाः सक्तून् घृतमित्यनुवर्तयेदात्मनोऽनुपदासाय" इति। ओदनधानादिव्रतमनुव्रतम्। उपदासश्शोषणम्, अनुपदासोऽशोषणम्। तदिदमनुव्रतं

1. पूर्वमीमांसा 1.2.17
2. पूर्वमीमांसा 3.8.9

प्रकृत्याम्नातम् – "द्व्यहं नाश्नाति अथाश्नातित्र्यहं नाश्नाति" इत्यादि। अनुव्रतेऽयं नियमः- यत्र क्रतौ दीक्षादिनानि वर्धन्ते तत्र यद्यात्मनोऽनुपदासायानुव्रतं कर्तुमभिलषेत्तर्हि दिनद्वयं किमप्यशनं न कुर्यात्, तदनन्तरदिनेऽश्नीयात्, ततो दिनत्रयं नाश्नीयादिति। तदिदमनशनं किमाध्वर्यवम्? उत याजमानम्? इति सन्दिह्य याजमानमिति सिद्धान्तयन् सूत्रयामास- "तपश्च फलसिद्धित्वाल्लोकवत्" इति। सूत्रगतं तपः पदं कायशोषणानशनपरम्। तपः कायशोषणमनशनमिदं याजमानम्, कुतः? फलसिद्धित्त्वात् फलस्य सिद्धिरुत्पत्तिर्यस्मात् तपः फलसिद्धिः, तद्भावस्तस्मात्। यथालोके स्वल्पक्लेशेनापि महतः फलस्यावाप्तिस्त-द्वदिति सूत्रार्थः। यथा दीक्षितस्यान्ये वपनादयस्संस्कारास्तथेदमनशनमपि तत्संस्काररूपम्। फलसंस्कारपदेनेमे व्यवह्रियन्ते। फली यजमानः, तस्य संस्कारा इत्यर्थः। एवं यजमानेनानुष्ठीयमानसंस्कारः यजमानसमारब्धकार्ययोग्यताधायकत्त्वेन परिगण्यते। योग्यताधानञ्च दृष्टादृष्टविधया द्विविधम्। प्रकृते चादृष्टविधया प्रतिबन्धकनिरासपूर्वकं योग्यताधानम्। प्रतिबन्धकमदृश्यम्, तदस्तीति निश्चित्य तन्निरासाय यत्नः क्रियते। यत्र प्रतिबन्धकं दृश्यं तन्निराकरणं दृष्टविधयैव सम्पाद्यते। यथा लोके दर्पणे विद्यमानं मालिन्यं बिम्बग्राहकप्रतिबन्धकमनुभूय तन्निरासाय भस्मघर्षणवस्त्रप्रोञ्छनादिकं क्रियते, तेन च दर्पणे बिम्बग्राहकयोग्यताधानञ्च सम्पाद्यते। अनेन लोकदृष्टान्तेन जैमिनिरस्मानध्यापयति- यत् सम्प्रति भारतीयैः कृत्रिमेण स्वाभाविकेन वा अंशन-वसनाद्यभावजनितक्लेशेन यद्दुःखं सुखोपभोगप्रतिबन्धकमनुभूयते तन्निराकरणं तपसाऽनशनेन साधनेन कर्त्तव्यमिति।

ज्योतिष्टोमेऽनशनमिदं याजमानम्, यजमान एव स्वगतस्वर्गादिसुखोपभोगप्रतिबन्धक-दुःखनिरासायानशनं करोति, तद्वल्लोकेऽपि अशनवसनादिसुखोपभोगप्रतिबन्धक-तदभावजनितदुःखनिरासं यजमानस्थानापन्ना राष्ट्रपति-राज्यपाल-प्रधानमुख्यमन्त्रिणो मन्त्रिणश्च कुर्वन्तु इति प्रश्नस्योत्तरं जैमिनिस्स्वयं ददाति- ''वचनादितरेषां स्यात्''[1] इति सूत्रेण। न हीदमनशनं याजमानमेव, किन्त्वन्येषामपि। शासका अनशनं कुर्वन्तु, वयं सकोलाहलं "धर्मघटं" कुर्मोऽस्माकमशनं वसनञ्चावश्यकमिति नायं न्याय्यः पन्थाः। उत्तुङ्गशिखरस्याभ्रंलिहस्य धराधरस्य समीकरणं न खलु क्षुद्रकायेन मूषिकेण भवितुमर्हति, तदर्थमसुरयन्त्रस्याणविकसाधनस्यापेक्षा भवति। अशन-वसन-न्यूनता-पिशाचिकायास्समुत्सारणं सर्वैस्सम्भूय कर्त्तव्यम्। एकार्बुदसङ्ख्याका भारतीयाः प्रतिमासमेकमहर्यद्यनशनं तपः कुर्युः न तर्हि अशनवसनन्यूनताया अवसरस्स्यादिति जैमिनिश्शिक्षयति।

## सत्रात्मकं प्रजातन्त्रविधानं भारतस्य

एवमस्माकं भारतस्य यत्प्रजातन्त्रविधानं तत्सत्रात्मकम्। सत्रे च सर्वे भवन्ति यजमानाः। त एव सम्भूयाध्वर्यवहौत्रौद्गात्रब्रह्मादिकार्याणि कर्त्तु योग्यानामृत्विजां चयनं

1. पूर्वमीमांसा ३:८:२, ३:८:११

कुर्वन्ति। गृहपतिश्च कञ्चन नियुञ्जते। अध्वर्योः कार्यमाध्वर्यवम्, होतुः कार्यं हौत्रम्, उद्गातुः कार्यमौद्गात्रम्, ब्रह्मणः कार्यं ब्राह्मम्। अध्वर्युहोत्रादीनां प्रत्येकं सहायकास्त्रयस्त्रयो भवन्ति। तस्य तस्य योग्यतां निर्धार्य तत्तत्कार्ये योग्यान् सञ्चिन्वन्ति। एतेषां कर्मसु न्यूनाधिकभावेन तरतमभावोऽस्त्येव, तथापि कर्मजन्यफलोपभोगे न न्यूनाधिकभावः। यावदेव फलं गृहपतिपदे नियुक्तः प्राप्नोति तावदेवाध्वर्य्वादयः तत्सहायकाश्च प्राप्नुवन्ति। किन्तु चयनावसरे सर्वेऽपि जागरुकाः भवन्ति, यथा यथं तत् तत्कार्यसम्पादनक्षमतां सुपरीक्ष्य सच्छीलं तत्तकर्मणि नियुञ्जते। अत्र नियोक्तारोऽपि त एव, त एव च नियोज्याः। नियोक्तृत्वेन महत्त्वबुद्धिः, नियोज्यत्वेन लघीयस्त्वबुद्धिर्न भवति। सर्वे समाः, सर्वे च तुल्यफलभाजः, सर्वे च यजमानसंस्कारसंस्कृता भवन्ति। गृहपतिपदे नियुक्तो मुख्यस्स्वीयं कर्म साधयति, अच्छावाक्पदे च नियुक्तोऽमुख्यस्स्वीयानि कर्माण्याचरति। अमुख्यस्य कर्मबाहुल्यं मुख्यस्य च तदल्पत्त्वं सिद्धमेव, तथापि कर्मजन्यं स्वर्गादिकं फलं तुल्यमेव। विषयोऽयं पूर्वोत्तरपक्षैर्जैमिनिना पूर्वमीमांसायाः[1] द्वादशाध्याये निरूपितः।

स्वतन्त्रभारते वयमेव नियोक्तारो नियोज्याश्च। तदैव खलु प्रजातन्त्रस्य प्रजातन्त्रत्वं सिद्ध्यति। गृहपतिपदे नियुक्तो राष्ट्रपतिः प्रधानमन्त्री वा। अन्ये च मन्त्रिणः उपमन्त्रिणस्सहायमन्त्रिणश्च नियुक्ताः। यथा केन्द्रे तथा प्रतिप्रान्तं राज्यपालः, मुख्यमन्त्री एवमन्ये च नियुज्यन्ते। "सर्वैर्वा तदर्थत्वात्"[2] (पू.मी 12:4:36) इति सूत्रयन् सर्वे यजमानाः याजमानफलिसंस्कारकर्मणि कुर्युरित्यनुशास्ति। सत्यवसरे न केवलमनशनं तपोपात्रं कुर्युः, किन्तु केदारेषु कर्षणमपि कुर्युः। तथाविधानामेव चयनावसरे योग्यानां चयनं कर्त्तव्यम्। अयोग्यान् नियुज्य पश्चात्तापकरणं जैमिनिर्न मन्यते। प्रथमत एव जागरुकैर्भवितव्यम्। यदि तथाविधा योग्या न लभ्यन्ते, तर्हि सोढ्वापि क्लेशं तथाविधाः समुत्पादनीयाः। भारतीय एकैकोऽप्यधिकरणमिदमधीत्य विषयमनुसन्दध्यात्।

"नष्टाश्वदग्धरथ" न्यायं तार्तीयप्रकरणाधिकरणेन"[3] "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायं चातुर्थिकप्रजापतिव्रताधिकरणेन[4] च साधयन् महर्षिर्जैमिनिः प्रजातन्त्रविधेस्स्वरूपं यथायथमवबोधयति। तथाहि – दर्शपूर्णमासौ स्वर्गार्थेन विहितौ "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति। स्वर्गे फले जननीये दर्शपूर्णमासयोः प्राधान्यम्, तत्र तादृशफलजननशक्तिरनादितस्सिद्धा, वह्नाविव दाहकत्वशक्तिः। तत्रत्या शक्तिर्नास्माभिस्समुत्पादनीया, सा हि वेदवाक्यप्रामाण्येन तत्र स्वतो नियता। किन्तु सा फलं जनयितुमनुग्राहकानपेक्षते। एवञ्च मुख्यौ दर्शपूर्णमासौ स्वर्गजननशक्तिमन्तावपि न फलं जनयतः अनुग्राहकसामग्री सापेक्षत्वाच्छक्तेरिति प्रधानयोर्दर्शपूर्णमासयोः स्थितिस्सिद्धा।

1. पूर्वमीमांसा १२:४:१-४७
2. पूर्वमीमांसा १२:४:३७
3. धर्मोपदेशाच्च न द्रव्येण सम्बन्धः। पूर्वमीमांसा ३:३:४
4. अपि वा कारणाऽग्रहणे तदर्थमर्थस्याऽनभिसम्बन्धात्। पूर्वमीमांसा ४:१:५

एवं तत्प्रकरणे बहून्युपकारकाणि अङ्गानि विहितानि, येषां फलं किमपि न श्रुतम्। इमानि किञ्चित्सम्पादयितुमभिलषन्ति। स्वातन्त्र्येण स्वर्गादिफलजनने नेमानि प्रभवन्ति, फलस्याश्रवणात्। किन्तु फलोत्पादकस्य साहाय्ये विदधन्ति तदनुग्राहकाणि भवितुमर्हन्ति तन्त्रीष्वनुगताया विद्युत इवानुग्राहकसामग्र्यः ''स्विच्'' प्रभृतयः। एवञ्चानाङ्गानां कार्यापेक्षा, प्रधानस्य चानुग्रहापेक्षेत्युभयोस्सम्बन्धः। अयमेव नष्टाश्वदग्धरथन्यायः। कुतश्चित्प्रस्थितयोर्द्वयो रथिनोः मध्येमार्गमेकस्याश्वो नष्टः, अपरस्य च रथो दग्धः। उभावपि प्रत्येकमाकाङ्क्षतः-रथमश्वञ्च। उभयोस्सम्बन्धेन स्वस्वेष्टदेशप्राप्तिरूपं फलमुभावप्यनुभवतः। अयमेव न्यायश्चतुर्थे प्रजापतिव्रताधिकरणे ''तथा च लोकभूतेषु''[1] इति सूत्रयता महर्षिणा ''फलवत्सन्निधावफलं तदङ्गम्'' इत्येवं विशदीकृतः।

प्रकृतेऽनयोर्न्याययोरुपयोगस्तु- राष्ट्रपतित्त्वेन वृतः प्रधानन्यायाधीशस्य सन्निधौ शपथं गृह्णाति - राष्ट्रमिदं न्यायेन पथा जनताकल्याणाय सञ्चालयामीति, राष्ट्रपतेस्सन्निधौ च प्रधानमन्त्री तत्सहायका अन्ये मन्त्रिणश्च तथैव शपथं गृह्णन्ति, एवं राज्येषु राज्यपालः, मुख्यमन्त्री तदनुयायिनो मन्त्रिणश्च स्वस्वकार्याणि जनतासुखसमृद्धये शपथं गृह्णन्ति। नियतं स्वस्वपदमधिरुह्य कार्याणि चालयन्ति। तत्तत्कार्यसञ्चालन इमे मुख्याः, तादृशीं शक्तिञ्चाबिभ्रति। शक्तिमन्तोऽपि जनता-साहाय्यं विना फलं जनयितुं, न प्रभवो भवन्ति। न ह्यधिकारमात्रेण कृषिमन्त्री केदारेषु सस्यान्युत्पादयितुं शक्नोति। रावणराज्ये सर्वमिदं स्वत एव जायमानमासीदिति भोजराजो वर्णयति। रामराज्यकल्पना खल्वस्माकम्। तत्र जनतायाः शक्त्यनुग्राहकत्वमस्ति। शक्त्यनुग्रहापेक्षा चाधिकारवतां मन्त्रिणाम्, कार्यापेक्षा च जनतायाः। अनुग्राहकत्वमङ्गानाम्, अनुग्राह्यत्वञ्च मुख्यस्य। एवमुभयोस्सापेक्षत्वान्मिथस्सम्बन्धः, तेनैव च सुखसम्पत्समृद्धिरिति नष्टाश्वदग्धरथन्यायस्य फलवत्सन्निधावफलं तदङ्गमिति न्यायस्य चोपयोगं विज्ञाय प्रजातन्त्रविधिं परिरक्षेयुरिति जैमिनेश्शासनम्।

दर्शपूर्णमाससन्निधौ श्रुतानि प्रयाजादीन्यङ्गानि फलजननौपयिकान्येव, किन्तु फलजननाय आग्नेयादयः प्रधानयागास्तैरनुमताः, अतस्तत्रत्यशक्तिसमेधकत्वेनैव फलजनने तैर्वर्तितव्यम् न तु स्वातन्त्र्येण। तथैव प्रजातन्त्रविधाने देश-समाजोत्थानानुकूलकार्यसम्पादनाय प्रधानमन्त्रिप्रभृतयो जनतया नियुक्ताः। अधिकारवन्तोऽपि ते स्वातन्त्र्येण तानि तानि कार्याणि सम्पादयितुं विना जनतासाहाय्यं न शक्नुवन्ति। जनतापि अधिकारविहीना स्वातन्त्र्येण न किमपि सम्पादयितुं शक्नोति। नियुक्तमन्त्रिणां साहाय्यप्रदानेन फलसम्पादनकार्ये तया प्रवर्तितव्यमिति द्वयोरपि न्याययोस्तात्पर्यम्।

**पाञ्चवार्षिक-योजनानां वैफल्ये दोषानुसन्धानम्**

एवं स्वतन्त्रे भारते लिखितुं भाषितुञ्च जनतायास्स्वातन्त्र्यमस्ति, न तु स्वाच्छन्द्यम्।

---

1. पूर्वमीमांसा ४:१:६

प्राय: पृच्छन्ति लोका: लिखन्ति च यत् प्रधानमन्त्रिणा मन्त्रिभिश्च प्रवर्तितासु बह्वीषु पञ्चवर्षीययोजनासु काश्चन विफला अजायन्त, प्रभूतस्य द्रव्यस्यापव्ययो जात:, तैरेव द्रव्यमिदमपहृतम्, विषयमिमं निर्धारयितुं, न्यायाधीशानां समिति: काचन नियोक्तव्या, मन्त्रिणश्च दण्डनीया:, पदाच्च ते च्यावयितव्या इति। सत्यमत्रास्त्यधिकारो जनताया:। अस्मिन् विषये पूर्वमीमांसासूत्रेषु जैमिनि: किमभिप्रैति किं वानुशास्तीति पश्याम:। षष्ठाध्यायस्य चतुर्थपादे पञ्चमाधिकरणसिद्ध: कश्चन न्याय:। तत्र ''यस्य पुरोडाश: क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति, यदा तद्धविस्सन्तिष्ठते अथ तदेव हविर्निर्वपेत्'' इति श्रुतम्। क्षायति-अतिदग्धो भवतीत्यर्थ:। अतिदोहन कृष्णीभावोऽत्र विवक्षित:। हविषोऽतिदाहे निमित्ते हविरन्तरनिर्वाप रूपं प्रायश्चित्तं विदधातीदं वाक्यम्। अत्र सन्देहो जायते-किमिदं प्रायश्चित्तमेकदेशदाहेऽपि कर्त्तव्यम्? उत कृत्स्नदाह एव? इति तत्रेदं सिद्धान्तसूत्रम्- "क्षामे तु कृत्स्न दाहे स्यादेकदेशस्यावर्जनीयत्त्वात्" इति। कृत्स्नदाहे क्षामे निमित्ते प्रायश्चित्तं हविरन्तरोत्पादनम्। प्राय: नष्टस्य चित्तं सन्धानं प्रायश्चित्तमित्यस्यार्थ:। एकदेशदाहस्तु सर्वत्रावर्जनीय:। तस्माद्धविष: सर्वदाहे निमित्ते प्रायश्चित्तमनुष्ठेयम्। तप्तेषु कपालेषु पच्यमाने पुरोडाशे तदुपरि चाङ्गारा अध्यूह्यन्ते, तदा सूक्ष्मास्तदवयवा अवश्यं क्षायन्तीत्यवर्जनीयमेकदेशस्य क्षाणं नित्यमेवेति तन्निमित्तं न भवितुमर्हति, किन्तु सर्वक्षाणमेव निमित्तम्। तस्मिन् सति प्रायश्चित्तमिति सिद्धान्त:।

प्रकृते पञ्चवर्षीययोजनानामारम्भावसरेऽनया योजनया एतावन्ति आयसानि वैद्युतानि ताम्रमयानि इतरधातुमयानि वा वस्तूनि समुत्पादनीयानीति सङ्कल्प्य योजना: प्रारभ्यन्ते। तत्रोद्दिष्टपरिमाणानि वस्तूनि यदि नोत्पादितानि ततोऽल्पान्येव तानि समुत्पादितानि तावता न योजनानां वैफल्यमारोपयितुं शक्यम्। तत्र धनास्यापव्यय इति न परिकल्पयितुं युक्तम्। धनस्य व्ययस्त्ववर्जनीय एव। अपव्यये निमित्तं कीदृशमिति पर्यवेक्षणीयम् किं सङ्कल्पितस्य वस्तूत्पादनस्य सर्वथा वैफल्यं जातम्? उत ईषत्? इति। सर्वदाह इव सर्वथा वैफल्यमेवापव्यये निमित्तमङ्गीकर्त्तव्यम्, नेषद्वैफल्यम्, ईषद्वैफल्यस्यावर्जनीयत्वात्। अतो नात्र दोषारोपस्यावसरो मन्त्रिषु। यदि सर्वथा वैफल्यं जातं तर्हि निश्चयेन प्रायश्चित्तस्य प्रसक्ति:। अत एव क्रतुषु ब्रह्मा पर्यवेक्ष्य प्रायश्चित्तं विदधाति। तद्वदत्रापि ब्रह्मस्थानीया पर्यवेक्षणसमिति: प्रायश्चित्तं विदध्यात्। कीदृशं तत्प्रायश्चित्तमत्र भवितुमर्हतीति जैमिनिमतमवलम्ब्य विमृशाम:। स्वीकृतयोजनाया: प्रकल्पको न केवलमेकस्तत्सम्बन्धी मन्त्री भवति। तस्यापि परामर्शदातृमण्डलमस्ति। सर्वैर्निपुणैस्सम्भूय योजना प्रकल्प्यते। योजनाया: कार्यरूपेण परिणमनाय कश्चन कार्यालय:, तत्र च कार्यकर्त्तार उच्चनीचभावेनाधिकृता नैकविधा लोका भवन्ति। कार्यकर्तृषु तत्रानियमितकार्याणि वा चौर्यं वा योजनावैफल्यं वा यद्यनुभूयन्ते तत्र दोषभाक्क:? झटिति ब्रवीति जनता-तत्सम्बन्धी मन्त्रालयो मन्त्री चेति, स दण्डनीयो निष्कासनीयश्चेति।

जैमिनिरत्रानुशास्ति–"गुणे त्वन्याय्यकल्पना"[1] इति। गुण उपसर्जने, अन्यायाय्यकल्पना–दोषकल्पनेति सूत्रार्थः। अयं न्यायः नावमिकपाशाधिकरणसिद्धः। अग्नीषोमीय पशौ "अदितिः पाशं प्रमुभोक्तु" "अदितिः पाशान् प्रमुभोक्तु'' इति यूपे प्रबद्धस्य पशोः पाशविमोचनाय मन्त्रद्वययाम्नातम्। अग्नीषोमीय पशुयागे पशोरेकत्वादेकवचनान्तस्य मन्त्रस्य तत्र समावेशे न काचिदस्ति विप्रतिपत्तिः। बहुवचनान्तो मन्त्रः किं क्रियताम्? इति प्रश्नो जायते– किमयं मन्त्रो बहुपशुकयागेषूत्कृष्यताम्? उतास्मिन्नेव यागे बहुवचनस्यैकत्वे लक्षणामन्याय्यकल्पनारूपां स्वीकृत्य निवेशः क्रियताम्? उत्कर्षपक्षे गुणभूतवचनानुरोधेन प्रधानस्य पाशप्रातिपदिकस्य निष्कासनं भवति। प्रकरण एव निवेशपक्षे गुणस्य वचनस्यैकत्वे लक्षणां स्वीकृत्य प्रधानस्य प्रकृतयाग एव निवेशो भवति। अत्र न्यायः ''गुणे त्वन्याय्यकल्पना" इति। प्रकृते कार्यालये उच्चनीचभावेनाधिकृताः पुरुषास्सन्तीत्यवोचाम्। किमपि कार्यं कार्यालयेषूपरितनाधिकारिण आदेशेनाधस्तादागत्य पुनः स्वस्वप्रधानद्वारोपरितनाधिकारिपर्यन्तं पत्रारूढं तत् कार्यं सविवरणमागच्छति। तदनन्तरं तत्सम्बन्धिमन्त्रिणोऽन्तिकमागच्छति, स च स्वीकरोति। तत्पश्चात्पूर्वदागत्य कार्याणि प्रचलन्ति इति क्रमो विलोक्यते। अयमेव प्रयोगविधिरित्युच्यते। प्रयोगावसरे क्वचिद्व्युत्क्रमो जातः। प्रयोगस्तु कार्यालये नियुक्तैः क्रियते न मन्त्रिणा प्रधानमन्त्रिणा वा। मन्त्रालयो मन्त्रिनाम्ना व्यवह्रि्येत कामम्, किन्तु कार्याणां प्रयोगस्तत्र नियुक्तैरेव सम्पाद्यते। ते च गुणभूताः, तैस्सावधानैर्भवितव्यं प्रथमम्। तत एव च व्युत्क्रमस्सम्भूतः। अतस्तत्रैवान्याय्यकल्पना समुचिता, न तु सर्वप्रधाने। न खलु क्वापि मत्कुणानां कृते गृहा दह्यन्ते। औषधादिना मत्कुणा एवापसार्यन्ते। तत्र मन्त्रिमण्डलेन किमपराध्यते? नात्र कोलाहलस्यावसरः। गुणप्रधानभाव आपेक्षिकः। एक एव निरूपकभेदेन गुणोऽपि भवति प्रधानोऽपि। अत एव ''सोमेन यजेत''इत्यत्र सोमप्रातिपादिकस्य सोमवति लक्षणा किं स्वीकर्त्तव्या? उत तृतीयया इति कर्त्तव्यतायां लक्षणा? इति विचारे प्रसक्ते ''गुणे त्वन्याय्यकल्पना'' इति न्यायमतिदिशन्ति मीमांसकाः। पाशाधिकरणे वचनप्रातिपदिकयोर्मध्ये प्रातिपदिकस्य प्राधान्ये निर्णीतेऽपि प्रातिपदिकस्य कारकापेक्षयागुणत्वमस्तीति तत्रैव तद्वति लक्षणाऽन्याय्यकल्पना स्वीक्रियते ''सोमवता'' इति, न तु कारकस्येति कर्त्तव्यतायाम्। प्रातिपदिकं वचनापेक्षया मुख्यमपि कारकापेक्षयोपसर्जनमेव ''प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन'' व्याकरणस्मृतेः। यद्यपि "सत्त्वप्रधानानि नामानि" इति प्रातिपदिकनिष्ठप्राधान्यबोधिका यास्कस्मृतिः, पूर्वोक्तव्याकरणस्मृतिं विरून्ध इव, किन्तूभयोर्यास्कपतञ्जल्योस्सद्वादित्वादुभयोः प्रामाण्यं व्यवस्थापनीयमेव। तत्र प्रातिपदिकं लिङ्गवचनापेक्षया प्रधानम्, प्रातिपदिकापेक्षया च कारकं प्राधानमित्यङ्गीकारे उभयोस्स्मृत्योस्सामञ्जस्यं प्रसिध्यति।

1. पूर्वमीमांसा ९:३:५:१४

एवञ्च प्रकृते प्रजातन्त्रविधानेऽपि दण्डनीतेरावश्यकत्वात् स च दण्डः कस्मै प्रदीयताम्? इति प्रश्ने जैमिनिरुपदिशति- "गुणे त्वन्याय्यकल्पना" इति। पञ्चवार्षिकयोजनानां परिचालनाय निर्मितेषु कार्यालयेषु गुणप्रधानभावेन विद्यमानानां कार्यकर्तॄणां मध्ये को वा दोषभाक्? इति पर्यालोच्य तस्मै दण्डो विधेयः, न तु मन्त्रिणे, नापि प्रधानमन्त्रिणे। प्रजातन्त्रविधौ सत्यमस्ति जनताया अधिकारो बलीयान् निग्रहेऽनुग्रहे च, किन्तु निग्रहे कालः प्रतीक्षणीयो भवति। पञ्चानां वर्षाणां कृते जनतयानुग्रहः कृतः, कश्चन गृहपतिपदे च नियुक्तः। तस्य प्रच्युतिर्निग्रहो वा सङ्कल्पितपञ्चवर्षाभ्यन्तरे न जनतया कर्तुं शक्यते।

**सत्रात्मकं प्रजातन्त्रम्**

किञ्च प्रजातन्त्रमिदं सत्रात्मकं भवतीति अवगन्तव्यम्। सत्रञ्च ऋद्धिकामैस्सम्भूय क्रियते। ऋद्धिश्च समृद्धिरैहिकं फलमामुष्मिकमपि। तच्च फलं षष्ठाध्यायस्य द्वितीय-पादाद्यधिकरणन्यायेन सत्रानुष्ठातृभिस्सर्वैस्समवाप्यते। कर्मजन्यफलस्वाम्यं सर्वेषामस्तीति सर्वे कर्त्तारः। सत्यप्युच्चनीचभावेन कार्यकलापे कर्तृत्वन्तु तुल्यमेव।

ज्योतिष्टोमादिसोमयागेषु कर्तृत्वमेकस्यैव, तस्यैव परिक्रीतार ऋत्विजो भवेयुः, तेषां कर्मजन्यफलभोक्तृत्वरूपं कर्तृत्वं न स्वीक्रियते। तद्वत्सत्रे नास्ति। सत्रं कर्मैव प्रजातन्त्रम्। इयांस्तु भेदः- सत्रे सर्वे यजमाना भवन्ति, प्रजातन्त्रसत्रे च जनतायाः प्रतिनिधयो यजमाना भवन्ति। मुख्याभावे कार्यनिर्वाहाय यदुपादीयते तत्प्रतिनिधिशब्देनोच्यते। प्रतिनिधिश्च न विधिविधेयो भवति, किन्तु सादृश्यमुन्नीय सुसदृशः पदार्थः कार्यनिर्वाहाय गृह्यते। किन्तु क्वचिद्वाक्येनैव प्रतिनिधिर्निर्दिश्यते। यथा "सोमाभावे पूतीकानभिषुणुयात्" इति। नात्र सोमस्थाने पूतीका विधीयन्ते, अपि तु सादृश्येन यस्मिन् कस्मिंश्चन द्रव्ये प्राप्ते अनेन वाक्येन नियम्यते।

सोऽयं विषयः षष्ठाध्यायस्य तृतीयपादे चतुर्थाधिकरणे "नियमार्थः क्वचिद्विधिः" "तन्नित्यं तच्चिकीर्षाहि[1] इति सूत्राभ्यां विशदीकृतः। अनेन न्यायेन प्रजातन्त्रसत्रेऽपि जनतया प्रतिनिधिनियमः क्रियते- अयमस्माकं नेता, इमे संसत्सदस्याः, इमे लोकसभायाः, इमे च राज्यसभाया इति। प्रतिनिहिताः पूतीका मुख्यसोमाभिन्न एव भवन्ति। यावन्तस्सोमे संस्कारास्तावन्तोऽन्यूनानतिरिक्ता अत्रापि सम्पाद्यन्ते। प्रतिनिधिरित्येतावता तत्र मुख्याद्दवीयसी बुद्धिर्न भवति। तथैव प्रजायाः प्रतिनिधिः प्रजैव भवति। अत एव प्रजाभिः कल्पितं तन्त्रं प्रजातन्त्रम् न तु प्रजाप्रतिनिधितन्त्रम्। तदिदं "तन्नित्यं तच्चिकीर्षा हि" इति सूत्रेण जैमिनिरवबोधयति।

प्रजासु कामं भिन्नरुचयो भवेयुः। स्वस्वरुच्यनुसारेण प्रतिनिधिचयनं कुर्युः। केचन "कामनिष्ठाः" अपरे "सोषलिष्टाः, अन्ये "जनतन्त्र" नाम्ना प्रसिद्धाः, केचिच्च

1. पूर्वमीमांसा 6.3.16-17

''काङ्ग्रसेया इत्येव मादयो बहवस्सङ्घास्स्युः। तत्र भूयोऽनुग्रहन्यायेनैक एव सङ्घः प्रजातन्त्रविधाने प्रतिनिधिरिष्यते। सर्वदलीयसंघस्तु न जनतोपकाराय कल्पते। अत्राप्यस्ति जैमिनेरनुशासनम्। सत्रेषु समानकल्पानामेवाधिकारो न भिन्नकल्पानामिति सिद्धान्तितम्-षष्ठाध्यायस्य षष्ठपादे प्रथमाधिकरणे ''सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन्'' इति सूत्रेण। वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तदन्येषाञ्च तनूनपात्सः। वसिष्ठाः तदन्ये च सम्भूय सत्रमाचरेयुस्तर्हि द्वितीयप्रयाजस्य द्वित्वमापतेत्, तथा च कर्मवैगुण्यं स्यात्। अतस्समाकल्पा एव यजेरन्। तथैव प्रकृते नानादलीयास्सम्भूय प्रजातन्त्रं चालयेयुस्तर्हि तत्तद्दलविरोधिकार्यकरणे वैमनस्यरूपं नैगुण्यं तेन चासन्तोषः शासनसूत्रमङ्गे परिणतस्स्यात्। अतस्समानकल्पानामेव भूयसां प्रजातन्त्रसत्रे कर्तृत्वं न्यायसिद्धम्।

एवं प्रजातन्त्रसत्रे भूयस्सु सत्रन्यायेषु प्रवृत्तेषु दीक्षितनियमपरिपालनन्यायोऽपि प्रवर्तते। सोऽप्यनुसरणीयः प्रजातन्त्रसत्रे दीक्षितैः। दीक्षितस्य नियमेषु ''दीक्षितो न ददाति न जुहोति न पचति'' इत्यादयस्सन्ति नियमाः। दानहोमपाकाः पुरुषार्थतया विहिताः केचन, अपरे च क्रत्वर्थतया विहितास्ते, अन्ये चातिदेशेन विकृतौ समायान्ति। किमत्र सर्वेषां निषेधः? उतातिदिष्टानां पुरुषार्थानाञ्च निषेधः? अथवा पुरुषार्थानामेव? इति त्रेधा सन्दिह्याविशेषेण सर्वेषां प्रतिषेध इति, अतिदिष्टानां पुरुषार्थानामेव प्रतिषेधः, न प्रत्यक्षोपदिष्टक्रत्वर्थानामिति च पूर्वपक्षयित्वा सिद्धान्तितम्- पुरुषार्थानामेव दानहोमपाकादीनां प्रतिषेध इति दशमाष्टमेऽष्टमाधिकरणे।

अत्र मतभेदेन पर्युदासप्रतिषेधविचारोऽप्यस्ति। पर्युदासपक्षे पुरुषार्थभिन्नाः क्रत्वर्थदानहोमपाकादयः कर्त्तव्या इति बुद्धिः, प्रतिषेधपक्षे च पुरुषार्थदानहोमपाकादयो न कर्त्तव्या इति बुद्धिः। प्रतिषेधपक्षे विकल्पप्रसक्तिरिति भिया पर्युदास इति केचन, यत्र प्रतिषेध्युप्रतिषेधयोरुभयोः क्रत्वर्थतया श्रवणं नास्ति तथैव विकल्पः। अयञ्च कर्त्रधिकरणसिद्धो न्यायः। यत्र च विधिबलात् क्रतुकाले पुरुषार्थतया प्रतिषेध्यस्य प्राप्तिः, तत्रैककालतया प्राप्तिमादाय तत्प्रतिषेध उपपद्यते तत्र विकल्पो न भवतीति प्रतिषेधमेव स्वीकुर्वन्ति, भिन्नार्थत्वाच्च न विकल्प इति च वदन्ति। यथा तथा वा पुरुषार्थतया प्राप्तानां दानहोमपाकानामनुष्ठानन्तु मतद्वयेऽपि सिध्यति। अनेन न्यायेन प्रजातन्त्रसत्रे दीक्षितैरपि पुरुषार्थदानहोमपाकादयो नाश्रयणीयाः। आत्मकल्याणार्थं क्रियमाणा दानहोमपाकादयः पुरुषार्थाः। देशकल्याणार्थ क्रियमाणा इमे क्रत्वर्थतुल्याः।

प्रजातन्त्रे प्रधानमन्त्रिपदे वा मन्त्रिपदे वा राज्यपालपदे वा राष्ट्रपतिपदे वा दीक्षितः आत्मार्थ स्वकुटुम्बार्थं वा दानहोमपाकादीन् न कुर्यात्। दानहोमपाकपदान्युप-लक्षकाणि गृहारामादिनिर्माण-व्यापारकरण-सामूहिकभोजप्रदान-विलासटन-वित्तसञ्चय-परिवारान्तर्गतपुरुषोन्नयनादीनाम्। क्रत्वर्थदानहोमपाकादीनि दीक्षितस्य यथानुमतानि, तथैव देशकल्याणाय विहितान्येव गृहारामादिनिर्माणादीन्यनुमतानि प्रजातन्त्रदीक्षितस्य।

विधिप्रतिषेधयोरनुवर्तनं नाम मुख्यः प्रणवः। अधिकारिभेदेन विधिप्रतिषेधा भवन्ति भिन्नाः। पुरुषार्थतया गृहारामपशुपुत्रधनधान्यादीनां सम्पादनं न दोषाय, किन्तु यान्येव विहितानि तानि क्रतुमध्ये प्रतिषिध्यन्त इति तत्र सुमहत्तात्पर्यं कल्पनीयं भवति। सत्रेषु सर्व एव यजमानाः स्वस्वाग्निषु गार्हपत्यादिषु मिथस्संसृष्टेषु संसृष्टैर्व्रीहियवधनादिद्रव्यैर्यजेरन्निति न्यायः षष्ठद्वितीयप्रथमाधिकरणे सिद्धः। देशं समाजञ्च समृध्या समेधयितुमयमुद्यमः प्रजातन्त्रसत्रं नाम। तत्र दीक्षितैरप्येवमनुष्ठेयम् यत्स्वीयं स्वीयं द्रव्यमेकीकृत्य देशार्थं समर्पणीयम्। तादृशस्त्यागो दीक्षितानामवश्यकः। तदैव ''सोषलिषम्'' इति यदद्यतनेषु दिवसेषु पदं शृणुमः तद्यथार्थं सिध्येत्। स्वस्वपुरुषार्थं सम्पादयितुं पुरुषस्य यथाधिकारं स्वातन्त्र्यं यद्विद्यते तन्नापहरणीयम्, न वा तत्र विघ्नबाधादिकमुपस्थापनीयम्, किन्तु दीक्षितैः क्रत्वर्थकर्मापि विहाय स्वस्वपुरुषार्थसम्पादनाय न यतितव्यम्। ''हिरण्यदा अमृतत्वं भजन्ते'' ''पुत्र कामो ब्राह्मोदनं पचेत्'' ''अग्निहोत्रं जुहुयात् स्वर्गकामः'' इत्यादीनि वाक्यानि पुरुषार्थतया कर्माणि विदधति।

तत्र सत्रेषु ये दीक्षिताः स्वस्वाग्नीनेकीकृत्य यजन्ते। तेषु कोऽप्यात्मनोऽमृतत्त्वप्राप्तये हिरण्यदानं न कुर्यात्। एवं न जुहुयात् न पचेत्पुरुषार्थतया। अन्यथा दीक्षितेषु ये फलानीमानि न वाञ्छन्ति तैस्सह पुरुषार्थकमनुष्ठातॄणां विसंवादस्स्यात्। सम्भूय समष्ट्या क्रियमाणे कर्मणि न व्यष्टेः कर्तृत्वमुपपद्यते। अतः पुरुषार्थानि निषिध्यन्ते कर्माणि।

एवं प्रकरणेऽस्मिन् लिप्साधिकरणन्यायोऽपि ध्यानमर्हति। द्रव्यार्जने सन्ति नैकविधा उपायाः - साधवोऽसाधवश्च, व्यक्तिभेदेने भ उपाया नियम्यन्ते प्रतिग्रहादिनैवार्जयेत्, जपादिनैवार्जयेत् पशुपालनादिनैवार्जयेदिति। यः प्रतिग्रहादिनैवार्जयति तस्यान्य उपाया अर्थान्निवर्तन्ते। तत्र हि पुरुषो नियमपुरस्सरं यद् द्रव्यमर्जयति तत्किं क्रत्वर्थम्? उत पुरुषार्थमिति विचारः प्रवर्तितः। पूर्वोक्ता नियमाः क्रत्वर्थत्व एव द्रव्यार्जनस्योपपद्यन्ते। प्रापञ्चिकसुखोपभोगाय यथाकथञ्चिदर्जितस्यापि द्रव्यस्य विनियोगो भवितुमर्हतीति तत्र नियमो नावश्यकः। नियमस्तु श्रूयते। स च क्रतुसम्बन्धः एवोपपन्नः। अतो नियमेनार्जितं द्रव्यं क्रत्वर्थमिति पक्षः। क्रत्वर्थस्य तस्य क्षुन्निवृत्यादिलौकिककर्मोपयोगित्वं कथमिति प्रश्ने जीवनाभावे क्रतुनिर्वर्तनमेवासम्भवतीति जीवनार्थत्वमप्याक्षिप्यत इति न दोषः। अत्र क्रत्वर्थं द्रव्यम्। सिद्धान्तस्तु पुरुषार्थमिति। पुरुषस्स्वोपभोगाय द्रव्यमर्जयति, तत्रापि प्रतिग्रहादयो नियमास्सार्थका एव। अर्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थमेव प्रत्यक्षमनुभूयते, नात्र क्रत्वर्थताकल्पकानुमानस्योदयः।

यदि पुरुषप्रीणनमेवोद्देश्यं द्रव्यार्जनस्य तर्हि नियमेन किम्? यथा कथञ्चिदर्जितेन द्रव्येण पुरुषः प्रीणात्विति प्रश्नस्स्यात् इति चेदत्र वदामः - प्रत्यवायपरिहारकत्वेन नियमस्य सार्थकत्वादिति। ''अन्याय्येनार्जयन् द्रव्यं प्रत्यवायेन युज्यते'' इत्यादिशास्त्रबलेन यथाकथञ्चिदर्जितस्य द्रव्यस्य प्रत्यवायजनकत्वमवगत्य तत्परिहारार्थं नियमेन

द्रव्यमर्जयितुं पुरुषं प्रवर्तते। अर्जितस्य द्रव्यस्य पुरुषार्थत्वे क्रतवः पुरुषेण कथं क्रियेरन् इति प्रश्ने सांसारिकपुरुषकार्येषु क्रतवोऽप्यन्तर्भवन्ति। पशुपुत्रधनधान्याद्यवाप्तये पुरुषाः क्रतूननुतिष्ठन्ति। अत्र क्रतवोऽपि पुरुषार्था इति न दोषः। एवं कृतस्य विचारस्येदं प्रयोजनम् यत्, प्रतिग्रहादिनियतोपार्जितस्यैव द्रव्यस्य क्रतौ जीवने चोपयोगः, तदितरस्मिन् पुरुषभोगे तु यथाकथञ्चिदर्जितस्येति पूर्वपक्षे। सिद्धान्ते तु क्रतौ तदितरस्मिंश्च पुरुषकार्ये सर्वत्र यथा कथञ्चिदनिषिद्धोपायार्जितद्रव्यस्य विनियोगः। नियमलोपे पुरुषः प्रत्यवैति, न क्रतोः किञ्चिद्वैगुण्यमिति।

एवं स्थिते प्रजातन्त्रस्य कियानुपयोगोऽस्य न्यायस्येति पश्यामः - पवित्रस्य क्रतोः स्थानापन्नं प्रजातन्त्रविधानमिति पूर्वमुक्तम्। लोके नानाविधेषु पुरुषकार्थेषु प्रजातन्त्रविधानमप्येकं कार्यम्, सर्वाः प्रजा मिलित्वा देशस्य कल्याणाय सङ्कल्पितमिदं विधानम्। विधानस्यास्य परिचालनाय जनतया वियुक्ताः विधायका यत्कार्यमाचरन्ति तत्क्रतुरूपं परमं पवित्रम्। न्यायेन पथा धनमर्जयितुमुपायान् निर्द्धारयन्ति विधायकाः। पुनः अर्जितस्य द्रव्यस्य पुरुषार्थस्य कियान् भागः क्रतौ प्रजाततन्त्रेऽपि विनियुक्तो भवत्विति निश्चित्य तदनुसारेण तं भागं गृह्णन्ति विधायकाः। पुरुषार्थकार्ये क्रतौ वानिषिद्धोपायार्जितद्रव्यस्य विनियोगस्ताजल्लिप्साधिकरणन्यायः। चौर्येणोत्कोचग्रहणादिना वार्जितस्य द्रव्यस्य वा गतिरिति प्रश्ने, द्रव्यार्जनोपायनियमलोपेनक्रतोः किञ्चित् वैगुण्यं पुरुषः परं प्रत्यवैति इति लिप्साधिकरणसिद्धान्तप्रयोजनेन प्रत्यवायरूपदण्डभाक् पुरुषः।

निषिद्धोपायार्जितञ्च द्रव्यं न तावत्क्रतौ विनियोक्तुं शक्यते। पुरुषस्य तत्र विद्यमानं स्वाम्यं निराकृत्य यस्माच्चौर्यं कृतम् येभ्यश्चोत्कोचो गृहीतस्तेभ्यस्तत्प्रदातव्यं यदीदं स्पष्टमवगम्यते। यदि नावगम्यते तर्हि तत्र साहाय्यकर्मणि तस्य विनियोगः कर्त्तव्यः। एवं कृतेऽन्येषामेतादृशेषु निषिद्धेषूपायेषु प्रवृत्तिर्वारिता भवेत्। अनिषिद्धोपायैर्द्रव्यमर्जयितुं तस्य तस्य पुरुषस्य स्वातन्त्र्यं नापहरणीयम्। किञ्चायं न्यायः जीवनायाहारः, न त्वाहाराय जीवनमिति शिक्षयति। यावता द्रव्येण जीवनं निर्वहेत्तावन्निक्षिप्यावशिष्टं क्रतुषु विनियोक्तव्यम्। पुरुषार्थकार्येषु क्रतवोऽपि सन्तीति न्यायोऽयं ब्रवीति। प्रजातन्त्रविधाने चेदृशं सच्चारित्रं शिक्षयत्ययं न्यायः। जनता वा तया नियुक्ता विधायका वा प्रधानतया देशभक्तिं दैवचिन्तनञ्च कुर्वन्तः प्रजातन्त्रविधानं परिपालयेयुरितिजैमिनिरनुशास्ति।

प्रजातन्त्रसत्रे दीक्षामापन्नाः प्रधानमन्त्रिप्रभृतयः पशुपुत्रधनधान्यादिकं व्यष्टिरूपेणार्जयितुं तदौपयिकानि कर्माणि यदि कुर्युस्तर्हि नियोजिकाया जनताया महान् विसंवादस्स्यात्- पूर्वेद्युरयं कीदृश आसीत् अद्य मन्त्रिपदमारूढः कथमस्ति? इति। अद्य राज्यसभायां लोकसभायाञ्च यावान् विप्लवः प्रचलति तस्य सर्वस्यापीदमेव मूलम्- यत् पुरुषार्थकर्माचरणं दीक्षितानाम्। विधिनिषेधौ सर्वैरप्यनुसरणीयौ विशेषेण दीक्षितैः। यथा पुरुषार्थविधयः तथा पुरुषार्थनिषेधा अपि। पुरुषार्थतया विहितं किञ्चित्क्रत्वर्थतया न

प्राप्नोति, तथाऽपि तन्निषेधः क्रत्वर्थतया श्रूयत एव ''नास्त्रियमुपेयात्'' इति। क्रत्वर्थत्वेन स्त्रियुपगमनं न प्राप्तम्, अथापि निषेधो वर्तते। अतो नात्र विकल्पस्यावसरः। एवञ्च य एव विधिनिषेधयोः पालकास्त एव सत्रेऽस्मिन्नधिकुर्युरिति जैमिनेर्न्यायः।

एतावता न्यायसन्दर्भेणेदमत्र निर्गलितं भवति यत् तादृशं प्रजातन्त्रविधानमवलम्बनीयम् यत्र चार्थकामयोः पुरुषार्थयोरेवोन्नयनं न स्यात् किन्तु संस्कृतेरपि भूयांस्तत्र सम्बन्धस्स्यात्। यावदर्थाकामौ संस्कृत्या न संयुज्येते तावदर्थकामौ सुदृढौ न स्याताम्। संस्कृतिपदेन नात्रवेषभूषादिकमभिप्रेयते, किन्तु चरित्रसंरक्षणम्, चिरन्तनैः प्रवर्तितानामनुशासनानां यथायथं परिपालनम्, विधिप्रतिषेधयोरनुसरणम्, यथाधिकारं स्वस्वकर्माचरणेऽभिरतिः, पक्षपातपरित्यागः, सत्युपादेयत्वे प्रतिपक्षिणामपि पक्षग्रहणम्, देशभक्त्या कर्माचरणम्, दैवचिन्तनम्, सच्छीलता, पापभीरुता, शरीराभिमानराहित्यम्, इत्यादयोऽभिप्रेयन्ते। एतेषामवलम्बनेनैवार्थकामयोस्समुन्नयने यतितव्यम्। सर्वेष्वेषु विषयेषु जैमिनिन्याया वर्तन्ते। न्यायानां पुरस्सर्वैर्नतमस्तकैर्भवितव्यम्। यथेच्छं तत्परिवर्तने समुदाय बलमस्तीति न प्रवर्तितव्यम्। इदमस्माकं प्रजातन्त्रविधानं जैमिन्यनुमतम्।

* * *

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# न्याय-वैशेषिकजगति दार्शनिकः गोवर्धनमिश्रः

खुशबू शुक्ला*

प्राचीनभारतीयज्ञानप्रणाल्यां नैके महर्षयः विद्वाँसः आचार्याश्च वाग्देवीस्वरूपया लेखन्या संस्कृतवाङ्मयपरम्परायाः संवर्धनं सम्पोषणञ्च चक्रुः। अतो हेतोरेव संस्कृतवाङ्मयस्य व्याकरण- साहित्य - आयुर्वेद-खगोलविज्ञान-गणित-दर्शन-इतिहास-पुराणादीनां बहव्यः शाखाः वर्तन्ते। किन्तु संस्कृतजगतः आचार्याणां ग्रन्थानाञ्च एका विशाला परम्परा कालकवलिता अप्रकाशिता चास्ति, यतोहि बहवः संस्कृतग्रन्थाः नष्टाः तथा बहव्यः पाण्डुलिपयः साम्प्रतमपि अप्रकाशिताः। यासु संभवतः संस्कृतक्षेत्रस्य एकोऽपेक्षितवर्गः विधीयते किन्तु अद्य यावत् तदस्पृष्टः वर्तते। तथापि संस्कृतस्य सर्वेषु सम्प्रदायेषु बहुविधग्रन्थाः ग्रन्थकाराश्च उपलभ्यन्ते, येषु आचार्यः गोवर्धनमिश्रः अन्यतमः। गोवर्धनमिश्रः दर्शनक्षेत्रे न्याय-वैशेषिकपरम्परायाः मूर्धन्यविद्वद्रूपेण गण्यते। न्याय-वैशेषिकग्रन्थानां टीकाकारेषु गोवर्धनमिश्रः अग्रणी वर्तते। यद्यपि आचार्येण न्याय-वैशेषिकदर्शने प्रकरणग्रन्थानां उपयोगिन्यः प्रसिद्धाश्च टीकाः विरचिताः तथापि आचार्यस्यास्य विषये अधिकं न ज्ञायते। कुत्रचिदपि गोवर्धनमिश्रस्य जीवनयात्राविवरणं न प्राप्यते। सम्प्राप्तानां स्वग्रन्थानामाद्यन्ते आचार्येणापि न किमपि सूचितं स्ववंशगोत्रकालादिकं तथापि न्याय-वैशेषिकदर्शनस्य केषाञ्चित् अन्यग्रन्थानां माध्यमेन तथा विद्वद्भिः कृतानां शोधकार्याणां माध्यमेन अमुष्य महोदयस्य विषये यथाशक्ति परिचयं प्रदातुं प्रयत्नः विधीयते। अतः प्रस्तुतशोधपत्रेण दार्शनिकगोवर्धनमिश्रस्य यथोपलब्धं व्यक्तित्वं कर्तृत्वञ्च अध्येतृणां पुरतः सम्पादयिष्यते।

**आचार्यस्य जन्मस्थानम्-** यद्यपि अमुष्य परिचये निश्चयेन न किमपि वक्तुमर्हामः तथापि कैश्चित् वाह्यसाक्ष्यैः येन केन प्रकारेण गोवर्धनाचार्यस्य विषये अनुमीयते यत् 'मिश्र' इति उपनामदर्शनादयं संभवतः 'मैथिलः' इति। यतोहि नव्यन्यायस्य परम्परा मिथिलाक्षेत्रादेव आरब्धा विकसिता चेति प्रसिद्धः। मिथिलायां बहवः नव्यनैयायिकाः नव्यन्यायं वर्धितवन्तः। गोवर्धनमिश्रस्यापि गतिः नव्यन्याये प्रतिष्ठिता।[1] तेषु नव्यनैयायिकेषु मिश्रोपनामधेयाः बहवः आचार्याः विद्यन्ते यथा पक्षधरमिश्रः, रघुपतिमिश्रः, माधवमिश्रः, पद्मनाभमिश्रः इत्यादयः। अतः गोवर्धनमिश्रोऽपि

* सहायक-आचार्या, ठाकुर-प्रसाद-महाविद्यालयः, मधेपुरा, बिहारप्रदेशः-852113

1. आचार्यस्य न्यायबोधिनीटीका नव्यन्यायस्य प्रौढरचनायां परिगणिता।

नव्यनैयायिकत्वात् मिश्रोपनामधेयत्वात् मिथिलादेशवासी इति प्रतीयते। किन्तु गोवर्धनस्य भ्रातुः रूपेण न्याय-वैशेषिकस्यैव आचार्यस्य पद्मनाभमिश्रस्य नाम श्रूयते।[1] आचार्यपद्मनाभस्य उपनाम 'मिश्रः' इति। केषुचित् स्थलेषु भट्टाचार्योऽपि दृश्यते।[2] अतः पद्मनाभविषये केचन वदन्ति यदयं बङ्गीयः। आचार्यगोवर्धनमिश्रस्य स्थानविषये इदन्तु निश्चितं यदयं पूर्वभारतक्षेत्रेण सम्बद्धः। किन्तु अयं बङ्गीयः मैथिलो वा विषयेऽस्मिन् निश्चयः दुष्करोऽनुभूयते। यद्यपि गोवर्धनाचार्यस्य उपनाम 'मिश्रः' तथा उल्लिख्यमानस्य भ्रातृवर्यस्य पद्मनाभाचार्यस्यापि उपनाम 'मिश्रः' तथापि पद्मनाभस्य 'भट्टाचार्यः' इत्युपनाम्ना अत्र निश्चयानवकाशः वर्तते। किन्तु 'भट्टाचार्यः' इति विषये इदमपि भवितुं शक्यते यत् पदमिदं पद्मनाभस्य उपाधिः स्यात् न तु उपनाम। पुराकाले बहवः आचार्याः उपाधिविभूषिताः आसन्। प्रायः तेषां नामपुरस्सरमुपाधेः संयोजनं भवति स्म। अतः नव्यन्यायभाषायां विरचितग्रन्थपरम्परानुसारेण मिश्रोपनामधेयेन च संभावनेयं प्रबला वर्तते यत् गोवर्धनमिश्रः मैथिलदेशीयः मैथिलब्राह्मणश्च आसीत्।

**परिजनाः -**

गोवर्धनमिश्रस्य तर्कभाषाया उपरि विरचितया तर्कभाषाप्रकाशटीकया एव ज्ञायते यत् गोवर्धनस्य पितुः नाम बलभद्रः मातुश्च नाम विजयश्रीदेवी आसीत्। अथ च असौ विश्वनाथपद्मनाभयोः अनुजत्वेन वर्तते।

**विजयश्रीतनूजन्मा गोवर्धन इति श्रुतः,**
**तर्कानुभाषां तनुते विविच्य गुरुनिर्मितिम्।**
**श्रीविश्वनाथानुजपद्मनाभानुजो गरीयान्बलभद्रजन्मा,**
**तनोति तर्कानधिगत्य सर्वान् श्रीपद्मनाभाद्विदुषो विनोदम्।**[3]

गोवर्धनस्य पिता बलभद्रः वैशेषिकदर्शनस्य वेदान्तदर्शनस्य च विद्वान् आसीत्। अनेनैव गोवर्धनस्य अग्रजाय पद्मनाभाय शास्त्रद्वयम् अध्याप्यते स्म। यद्यपि बलभद्रस्य पूर्णकृतित्वमप्राप्तमस्ति तथापि अस्य वर्धमानकृतकिरणावलीप्रकाशस्य उपरि विरचिता युक्तिकल्पद्रुमटीका, सप्तपदार्थीटीका, तार्किकरक्षाटीका, तर्कभाषाटीकाश्च इत्यादयः ग्रन्थाः प्रसिद्धास्सन्ति।[4] बलभद्रस्य पाण्डित्यकारणादेव गोवर्धनः पद्मनाभश्च अमुं 'जगद्गुरुः' इति नाम्ना सम्बोधयतः स्म। यथोक्तं गोवर्धनेन तर्कभाषाप्रकाशे **"इति श्रीजगद्गुरुमिश्रबलभद्रात्मजविजय-श्रीगर्भसंभवविश्वनाथानुजपद्मनाभानुजमिश्रगोवर्धन-**

---

1. किरणावली, भास्कर-भूमिका (Ed- by Gopinath Kaviraj)
2. शोधपत्रम् - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान (पृ. - ४)
   See Adyar Library Bulletin VIII- Mss- Notices, pp 111-116
3. मङ्गलाचरणम् - तर्कभाषाप्रकाशः
4. किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका

**विरचिततर्कभाषाप्रकाशः समाप्तः"।**[1] पद्मनाभेन तु स्वीक्रियते यत् मया यत्किमपि लिख्यते तत्सर्वं स्वपितुरेव सम्प्राप्तम्।[2] गोवर्धनस्य एतयोरग्रजयोः विश्वनाथस्य जीवनविषये कार्यविषये वा साम्प्रतं किमपि विवरणं नोपलभ्यते। परञ्च पद्मनाभमिश्रस्य जीवनं कृतित्वञ्च ज्ञायते स्वल्पम्। आचार्यपद्मनाभः **'भट्टाचार्यः' 'सकलशास्त्रारविन्दप्रद्योतनश्च'** इत्युपाधिना अलङ्कृतः।[3] पद्मनाभस्य आश्रयदाता बघेलराजपरिवारस्य राजकुमारः वीरभद्रः आसीत्।[4] आचार्यपद्मनाभः नैकशास्त्राणां विशारदः आसीत्। अस्य कृतीषु न्यायवैशेषिकसम्बद्धग्रन्थाः चिन्तामणिपरीक्षा, प्रशस्तपादभाष्यस्य सेतुटीका, वर्धमानेन्दुटीका, किरणावलीभास्करटीका, न्यायकन्दलीटीका, कणादरहस्यम्, अनुनयटीका च सन्ति।[5] वेदान्तदर्शनस्य खण्डनखण्डखाद्यटीका, काव्यग्रन्थः वीरभद्रदेवचम्पू, आलङ्कारिकग्रन्थः शरदागमः चन्द्रालोकप्रकाशो वा प्राप्यते।[6]

गोवर्धनमिश्रस्य गुरुरूपेण अग्रजपद्मनाभस्य नाम श्रूयते। अनेनैव गोवर्धनः शास्त्राणां शिक्षणं सम्प्राप्तः। ततः परमेव गोवर्धनमिश्रः तर्कभाषाया उपरि तर्कभाषाप्रकाशटीकां तर्कसङ्ग्रहस्य उपरि न्यायबोधिनीं नाम्नीं टीकाञ्च विरचितवान्। कुत्रचित् प्राप्यते यत् गोवर्धनमिश्रः केशवमिश्रस्य शिष्यः आसीत्। कार्ल.एच्. पॉटरमहोदयेन "Encyclopedia of Indian Philosophies" इत्यस्मिन् ग्रन्थे आकलनं कृतं यत् गोवधर्नमिश्रः शिष्यत्वेन केशवमिश्रस्य सान्निध्यं स्वीकृतवान् आसीत्।[7]

**गोवर्धनमिश्रस्य कालः -**

"Encyclopedia of Indian Philosophies" इत्यस्मिन् पुस्तके गोवर्धनमिश्रस्य कालः षोडशशताब्दी (१५७९) ई. स्वीक्रियते। तर्कसङ्ग्रहस्योपरि अनेन टीका विरचिता अतः अस्य कालस्य पूर्वसीमा षोडश-सप्तदशशताब्दी इति वक्तुं शक्नुमः। पॉटरमहोदयस्य कालक्रमनिर्धारणेऽपि यो कालः निर्धारितः। तेन वक्तुं शक्नुमः यत् अयं गोवर्धनमिश्र एव तर्कसङ्ग्रहस्य न्यायबोधिनीटीकायाः रचनाकारः। पुनश्च आचार्यपद्मनाभस्य कालोऽपि षोडशशताब्दी स्वीक्रियते[8] । 'New Catalogus catalogorum' इत्यस्मिन् ग्रन्थे

---

1. तर्कभाषाप्रकाशटीका - अन्तिमा पङ्क्तितः
   किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका
2. किरणावली भास्कर - भूमिका (ed- by Gopinath Kaviraj)
3. शोधपत्र - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान (पृ. - ४)
   See Adyar Library Bulletin VIII- Mss- Notices, pp 111-116, किरणावलीभास्कर - पद्मनाभमिश्र, भूमिका 'कणादरहस्यम्' ग्रन्थ की पुष्पिका में उद्धृत - BORI, FOLIO 22
4. अमुनानृणीकृता वयमन्यवदान्याद् विशिष्टेन। प्रत्युपकारधियाऽयं रचितो ग्रन्थस्ततोऽस्माभिः। किरणावलीभास्कर- पद्मनाभमिश्रः, भूमिका
5. शोध-पत्रम् - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान
6. तत्रैव
7 Encyclopedia of Indian Philosophies, Vol xiii – page 291
8. किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका

नव्यनैयायिकत्वात् मिश्रोपनामधेयत्वात् मिथिलादेशवासी इति प्रतीयते। किन्तु गोवर्धनस्य भ्रातुः रूपेण न्याय-वैशेषिकस्यैव आचार्यस्य पद्मनाभमिश्रस्य नाम श्रूयते।[1] आचार्यपद्मनाभस्य उपनाम 'मिश्रः' इति। केषुचित् स्थलेषु भट्टाचार्योऽपि दृश्यते।[2] अतः पद्मनाभविषये केचन वदन्ति यदयं बङ्गीयः। आचार्यगोवर्धनमिश्रस्य स्थानविषये इदन्तु निश्चितं यदयं पूर्वभारतक्षेत्रेण सम्बद्धः। किन्तु अयं बङ्गीयः मैथिलो वा विषयेऽस्मिन् निश्चयः दुष्करोऽनुभूयते। यद्यपि गोवर्धनाचार्यस्य उपनाम 'मिश्रः' तथा उल्लिख्यमानस्य भ्रातृवर्यस्य पद्मनाभाचार्यस्यापि उपनाम 'मिश्रः' तथापि पद्मनाभस्य 'भट्टाचार्यः' इत्युपनाम्ना अत्र निश्चयानवकाशः वर्तते। किन्तु 'भट्टाचार्यः' इति विषये इदमपि भवितुं शक्यते यत् पदमिदं पद्मनाभस्य उपाधिः स्यात् न तु उपनाम। पुराकाले बहवः आचार्याः उपाधिविभूषिताः आसन्। प्रायः तेषां नामपुरस्सरमुपाधेः संयोजनं भवति स्म। अतः नव्यन्यायभाषायां विरचितग्रन्थपरम्परानुसारेण मिश्रोपनामधेयेन च संभावनेयं प्रबला वर्तते यत् गोवर्धनमिश्रः मैथिलदेशीयः मैथिलब्राह्मणश्च आसीत्।

**परिजनाः -**

गोवर्धनमिश्रस्य तर्कभाषाया उपरि विरचितया तर्कभाषाप्रकाशटीकया एव ज्ञायते यत् गोवर्धनस्य पितुः नाम बलभद्रः मातुश्च नाम विजयश्रीदेवी आसीत्। अथ च असौ विश्वनाथपद्मनाभयोः अनुजत्वेन वर्तते।

**विजयश्रीतनूजन्मा गोवर्धन इति श्रुतः,**
**तर्कानुभाषां तनुते विविच्य गुरुनिर्मितिम्।**
**श्रीविश्वनाथानुजपद्मनाभानुजो गरीयान्बलभद्रजन्मा,**
**तनोति तर्कानधिगत्य सर्वान् श्रीपद्मनाभाद्विदुषो विनोदम्।**[3]

गोवर्धनस्य पिता बलभद्रः वैशेषिकदर्शनस्य वेदान्तदर्शनस्य च विद्वान् आसीत्। अनेनैव गोवर्धनस्य अग्रजाय पद्मनाभाय शास्त्रद्वयम् अध्याप्यते स्म। यद्यपि बलभद्रस्य पूर्णकृतित्वमप्राप्तमस्ति तथापि अस्य वर्धमानकृतकिरणावलीप्रकाशस्य उपरि विरचिता युक्तिकल्पद्रुमटीका, सप्तपदार्थीटीका, तार्किकरक्षाटीका, तर्कभाषाटीकाश्च इत्यादयः ग्रन्थाः प्रसिद्धास्सन्ति।[4] बलभद्रस्य पाण्डित्यकारणादेव गोवर्धनः पद्मनाभश्च अमुं 'जगद्गुरुः' इति नाम्ना सम्बोधयतः स्म। यथोक्तं गोवर्धनेन तर्कभाषाप्रकाशे **"इति श्रीजगद्गुरुमिश्रबलभद्रात्मजविजय-श्रीगर्भसंभवविश्वनाथानुजपद्मनाभानुजमिश्रगोवर्धन-**

---

1. किरणावली, भास्कर-भूमिका (Ed- by Gopinath Kaviraj)
2. शोधपत्रम् - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान (पृ. - ४)
   See Adyar Library Bulletin VIII- Mss- Notices, pp 111-116
3. मङ्गलाचरणम् - तर्कभाषाप्रकाशः
4. किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका

**विरचिततर्कभाषाप्रकाशः समाप्तः"।**[1] पद्मनाभेन तु स्वीक्रियते यत् मया यत्किमपि लिख्यते तत्सर्वं स्वपितुरेव सम्प्राप्तम्।[2] गोवर्धनस्य एतयोरग्रजयोः विश्वनाथस्य जीवनविषये कार्यविषये वा साम्प्रतं किमपि विवरणं नोपलभ्यते। परञ्च पद्मनाभमिश्रस्य जीवनं कृतित्वञ्च ज्ञायते स्वल्पम्। आचार्यपद्मनाभः **'भट्टाचार्यः' 'सकलशास्त्रारविन्दप्रद्योतनश्च'** इत्युपाधिना अलङ्कृतः।[3] पद्मनाभस्य आश्रयदाता बघेलराजपरिवारस्य राजकुमारः वीरभद्रः आसीत्।[4] आचार्यपद्मनाभः नैकशास्त्राणां विशारदः आसीत्। अस्य कृतीषु न्यायवैशेषिकसम्बद्धग्रन्थाः चिन्तामणिपरीक्षा, प्रशस्तपादभाष्यस्य सेतुटीका, वर्धमानेन्दुटीका, किरणावलीभास्करटीका, न्यायकन्दलीटीका, कणादरहस्यम्, अनुनयटीका च सन्ति।[5] वेदान्तदर्शनस्य खण्डनखण्डखाद्यटीका, काव्यग्रन्थः वीरभद्रदेवचम्पू, आलङ्कारिकग्रन्थः शरदागमः चन्द्रालोकप्रकाशो वा प्राप्यते।[6]

गोवर्धनमिश्रस्य गुरुरूपेण अग्रजपद्मनाभस्य नाम श्रूयते। अनेनैव गोवर्धनः शास्त्राणां शिक्षणं सम्प्राप्तः। ततः परमेव गोवर्धनमिश्रः तर्कभाषाया उपरि तर्कभाषाप्रकाशटीकां तर्कसङ्ग्रहस्य उपरि न्यायबोधिनीं नाम्नीं टीकाञ्च विरचितवान्। कुत्रचित् प्राप्यते यत् गोवर्धनमिश्रः केशवमिश्रस्य शिष्यः आसीत्। कार्ल.एच्. पॉटरमहोदयेन "Encyclopedia of Indian Philosophies" इत्यस्मिन् ग्रन्थे आकलनं कृतं यत् गोवधर्नमिश्रः शिष्यत्वेन केशवमिश्रस्य सान्निध्यं स्वीकृतवान् आसीत्।[7]

**गोवर्धनमिश्रस्य कालः -**

"Encyclopedia of Indian Philosophies" इत्यस्मिन् पुस्तके गोवर्धनमिश्रस्य कालः षोडशशताब्दी (१५७९) ई. स्वीक्रियते। तर्कसङ्ग्रहस्योपरि अनेन टीका विरचिता अतः अस्य कालस्य पूर्वसीमा षोडश-सप्तदशशताब्दी इति वक्तुं शक्नुमः। पॉटरमहोदयस्य कालक्रमनिर्धारणेऽपि यो कालः निर्धारितः। तेन वक्तुं शक्नुमः यत् अयं गोवर्धनमिश्र एव तर्कसङ्ग्रहस्य न्यायबोधिनीटीकायाः रचनाकारः। पुनश्च आचार्यपद्मनाभस्य कालोऽपि षोडशशताब्दी स्वीक्रियते[8] । 'New Catalogus catalogorum' इत्यस्मिन् ग्रन्थे

1. तर्कभाषाप्रकाशटीका - अन्तिमा पङ्क्तिततः
   किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका
2. किरणावली भास्कर - भूमिका (ed- by Gopinath Kaviraj)
3. शोधपत्र - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान (पृ. - ४)
   See Adyar Library Bulletin VIII- Mss- Notices, pp 111-116, किरणावलीभास्कर - पद्मनाभमिश्र, भूमिका 'कणादरहस्यम्' ग्रन्थ की पुष्पिका में उद्धृत - BORI, FOLIO 22
4. अमुनानृणीकृता वयमन्यवदान्याद् विशिष्टेन। प्रत्युपकारधियाऽयं रचितो ग्रन्थस्ततोऽस्माभिः। किरणावलीभास्कर-पद्मनाभमिश्रः, भूमिका
5. शोध-पत्रम् - आचार्य पद्मनाभ मिश्र का संस्कृत को योगदान
6. तत्रैव
7 Encyclopedia of Indian Philosophies, Vol xiii – page 291
8. किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका

आचार्यस्य कालः षोडशशताब्द्याः उत्तरार्धमुल्लिख्यते।[1] अतः गोवर्धनमिश्रस्य कालः संभवतः षोडशशताब्द्याः उत्तरार्धं[2] सप्तदशशताब्द्याः पूर्वार्धं स्वीकर्तुं शक्यते। पुनश्च अनेन तर्कसङ्ग्रहस्य टीका न्यायबोधिनी विरचिता। तर्कसङ्ग्रहकारस्य रचनाकालः सप्तदशशताब्दी स्वीक्रियते। अतः आचार्यस्य कालः षोडशशताब्द्याः उत्तरार्धं सप्तदशशताब्द्याः पूर्वार्धं तथा न्यायबोधिन्याः कालः संभवतः सप्तदशशताब्द्याः उत्तरार्धमेव स्वीकर्तुं शक्नुमः।

**व्यक्तित्वपरिचये अन्यबिन्दवः -**

गोवर्धनमिश्रस्य अपरनाम गोवर्धनसूरी गोवर्धनसुधीः वा अपि प्राप्यते अन्यत्र।[3] न्यायबोधिन्यां गोवर्धनाचार्येण मङ्गलाचरणे वासुदेवस्य स्तुतिः कृता। येन अनुमीयते यत् न्यायबोधिनीकारः वैष्णवसम्प्रदायस्य अनुयायी आसीत् -

**अखिलागमसंचारि श्रीकृष्णाख्यं परं महः।**
**ध्यात्वा गोवर्धनसुधीस्तनुते न्यायबोधिनीम्।।**[4]

पुनश्च न्यायबोधिन्याः टीकायाः अन्तिमे श्लोकेऽपि आचार्येण कृष्णस्य स्तुतिः कृता। अनया स्तुत्या पुनः मतमिदं सुदृढं भवति यत् आचार्यः विष्णोः उपासक इति।

**कृष्णावलम्बिनो गाः पुषो गोवर्धनस्तमभ्यर्चन्।**
**विपुलाभीरसभाजनजनितबुधेन्द्रस्तवाभिरचनाभिः।।**[5]

**कर्तृत्वम् -**

गोवर्धनमिश्रेण न्यायवैशेषिकदर्शनस्य सुप्रसिद्धप्रकरणग्रन्थस्योपरि नव्यन्याय-दिग्दर्शिनी विषयप्रवेशिनी च न्यायबोधिनी नाम्नी टीका विरचिता। पुनश्च अनेन केशवमिश्रकृतस्य तर्कभाषाग्रन्थस्योपरि तर्कभाषाप्रकाशनाम्नी टीका अपि विरचिता इति महामहोपाध्यायस्य उमेशमिश्रमहोदयस्य मतं[6] किन्तु तर्कसङ्ग्रहोपलब्धकतिपयटीकाः पाश्चात्यावधारणाश्च अवलम्ब्य आङ्ग्लभाषायां तर्कसङ्ग्रहस्य व्याख्याता बोडासमहोदयः अस्मिन् विषये विप्रतिपद्यते।[7] तर्कसङ्ग्रहः तर्कभाषा च न्याय-वैशेषिकक्षेत्रे प्रकरणग्रन्थस्य मुकुटमणी इव विराजेते। तर्कसङ्ग्रहः वैशेषिकदर्शनप्रधानप्रकरणग्रन्थेषु अन्यतमः वर्तते तथा तर्कभाषा न्यायदर्शनप्रधानप्रकरणग्रन्थेषु विशिष्टं स्थानं भजते। अतः संभावना इयं प्रबला भवति यत् गोवर्धनमिश्रेण यदि तर्कसङ्ग्रहस्योपरि न्यायबोधिनी टीका विरचिता तर्हि

---

1. New catalogus catalogorum, VI – p. १८६
2. Introduction of Tarkabhasha – Edited by Shivam Mhadeo Paranjape
3. Encyclopedia of Indian Philosophies, Vol xiii – page 291, Tarksangraha of Annambhatta, English translation with notes, V-N- Jha & commentaries index
4. न्यायबोधिनी – मङ्गलाचरणम्
5. न्यायबोधिनी – अन्तिमं पद्यम्
6. तर्कसङ्ग्रहः, प्राचीननवटीकासहितः – पृ० ७
7. तत्रैव

तर्कभाषायाः उपर्यपि आचार्यः तर्कभाषाप्रकाशनाम्नीं टीकां विरचितवान्। यतोहि कश्चन अपि न्याय-वैशेषिकस्य विद्वान् प्रकरणग्रन्थक्षेत्रे एतौ द्वौ प्रकरणौ स्वलेखन्या विश्लेषितुम् इच्छति। अतो हेतोः केशवमिश्रेणापि तर्कसङ्ग्रहन्यायबोधिन्यतिरिक्तं तर्कभाषायाः उपरि यदि 'तर्कभाषाप्रकाश' इति टीका विरचिता तर्हि नात्र आश्चर्यविषयः। अथ च वयं तर्कभाषाप्रकाशस्य कर्तृविषये गोवर्धनमिश्रमहोदयस्य कर्तृरूपेण संभावनां कर्तुं शक्नुमः।

अस्य कर्तृत्वविषये ग्रन्थद्वयमेव अद्यावधिपर्यन्तं श्रूयते। तर्कसङ्ग्रहस्य नव्यन्यायाधृता टीका न्यायबोधिनी, तर्कभाषायाः टीका तर्कभाषाप्रकाशश्च। अत्र उल्लिखितं ग्रन्थद्वयमेव टीकाग्रन्थौ। एतस्य स्वतन्त्रग्रन्थस्य कश्चनपि साक्ष्यः न उपलभ्यते। संभवतः आचार्यस्य अन्यग्रन्था अपि आसन्। किन्तु साक्ष्याभावे तेषां विवरणं न ज्ञायते अस्माभिः। यतोहि अनेन कुत्रचित् ग्रन्थनाम विना कस्मिंश्चित् प्रकरणे केवलं 'मत्कृतौ' इत्युल्लिख्यते (कस्मिन् ग्रन्थे)। अत्र 'मत्कृतौ' इत्यस्मिन् विषये गौरीकान्तः मध्वदेवश्च आक्षेपं कुर्वन्तौ उक्तवन्तौ यत् एताः कृतयः गोवर्धनस्य न सन्ति अपितु तत्पितुः बलभद्रस्य सन्ति। यतोहि गोवर्धनस्य लेखनशैली बलभद्रवदेव प्रतीयते। किरणावलीभास्करटीकायाः भूमिकायामपि उक्तं यत् गौरीकान्तः बलभद्रं गोवर्धनञ्च निन्दति यतोहि गोवर्धनः स्वपितुः धूमलप्रसिद्धेः पुनरुद्धारार्थं ग्रन्थादिकं विरचितवान् किन्तु गोपीनाथमहोदयेन एतत् न स्वीकृतम्। तेनोच्यतेऽपि - "Gaurīkānta's strictures on Bhalbhadra and Govardhan (who took up his pen simply to re&establish his father's waning fame) need not to be taken in more than a passing fashion"[1] - अस्मात् कारणात् परांजपे महोदयेन अनुमीयते यत् गोवर्धनाचार्यस्य संभवतः अन्यकृतयोऽपि विधीयन्ते।[2] अतः ये ग्रन्थाः उपलब्धास्सन्ति। तानेव विचारयाम अवलोकयामो वा।

**तर्कभाषाप्रकाशटीका -**

टीकेयं केशवमिश्रप्रणीततर्कभाषाया उपरि विरचिता गोवर्धनाचार्येण। प्रथमम् अत्र मङ्लाचरणं विधीयते। तदनु श्लोकद्वये स्वकुटुम्बिनां परिचयो प्रदत्तः। एषा टीका सामान्यशैल्यां विरचिता अस्ति। अत्र विश्लेषणात्मकपद्धत्या टीकनं कृतम् आचार्येण न्यायसिद्धान्तानाम्। अत्र प्रमाणापेक्षया कारणसिद्धान्तः विस्तृततया विविच्यते। अत्र प्रमाणेषु अनुमानादीनां विवेचनं तथा न प्राप्यते यथा न्यायबोधिन्याम्। अस्य कारणं भवितुं शक्नोति यत् न्यायबोधिनी नव्यन्यायशैल्यां विरचिता। नव्यन्याये प्रमाणस्य प्राधान्यम्। अतः न्यायबोधिन्यामपि तत् परिलक्ष्यते। यद्यपि न्यायबोधिनी वैशेषिकप्रधानप्रकरणग्रन्थस्य टीका वर्तते तथापि परम्परायाः प्रभावो तु प्राप्यत एव। किन्तु तर्कभाषाप्रकाशटीका सामान्यशैल्यां विरचिता। अथ च प्राचीनन्यायप्रधानप्रकरणग्रन्थस्य टीका अस्ति। प्राचीनन्याये प्रमाणापेक्षया पदार्थस्य प्राधान्यमिति तु प्रसिद्धमेव। संभवतः अस्मात् कारणात्

1. किरणावलीभास्करः - पद्मनाभमिश्रः, भूमिका
2. Introduction of Tarkabhāshā (With the commentary Prakāśa of Govardhana)

अस्यां टीकायामपि आचार्येण पदार्थानामेव विस्तृतविश्लेषणं कृतं न तु प्रमाणानाम्। तर्कभाषाया: टीकेयं अतीवमहत्वपूर्णा वर्तते यतोहि गोवर्धनस्य अस्या: टीकाया: उपरि पुन: आचार्याखण्डानन्देन गुनरत्नगनिमहोदयेन च टीका कृता।[1]

**न्यायबोधिनीटीका -**

नव्यन्यायस्य आवश्यकसिद्धान्तानां समासेन संकलयित्री यथाप्रकरणमुपयुक्त-सिद्धान्तानां प्रस्तुतकर्त्री तर्कसङ्ग्रहस्य प्रचलिता प्रसिद्धा च न्यायबोधिनीटीका। गोवर्धनमिश्रस्य इयं टीका पूर्णतया नव्य-न्यायस्यैव शैलीं प्रतिपादयति। अस्या: टीकाया: वैशिष्ट्यम् एतदेव अस्ति यदत्र अपेक्षितशब्देषु निश्चितार्थस्य विधानं क्रियते। संभवत: अस्मात् कारणादेव न्यायबोधिनी तर्कसङ्ग्रहस्य उपलब्धासु नव्यन्यायटीकासु मूर्धन्या स्वीकृता संस्कृताचार्यै:। 'न्यायबोधिनी' इति नाम्नी एका अपरा टीका अपि तर्कसङ्ग्रहस्योपरि विरचिता। अस्या: टीकाया: टीकाकार: 'शुक्लरत्ननाथ:' वर्तते।[2] किन्तु एतत् न ज्ञायते यत् इयं टीका नव्यन्यायशैल्यामस्ति न वा। अस्या: प्रकाशनमित्यादिकमपि न विज्ञातम्। नामसदृशत्वात् अत्र अस्या: टीकाया: उल्लेख: कृत:। यतोहि कदाचित् नामैकत्वात् भ्रम: जायते।

एवम्प्रकारेण ज्ञायते यत् आचार्य: गोवर्धनमिश्र: न्याय-वैशेषिकजगति अभूतपूर्व योगदानं दत्तवान्। यद्यपि आचार्यस्य ग्रन्थानां संख्या न्यूना एव तथापि ग्रन्थद्वयेनैव आचार्य: न्यायजगति अक्षयकीर्तिमर्जितवान्। संस्कृतवाङ्मयपरम्परायां प्राय: वयं पश्याम: यत् सूत्रग्रन्थानां प्रकरणग्रन्थानाञ्च रचनाकाराणां परिचयविषये अन्वेषणम् अध्ययनञ्च क्रियते किन्तु टीकाकाराणां परिचय: तथा नोपलभ्यते। अस्यां दिशि टीकाकारा: उपेक्षिता इव प्रतीयन्ते। संस्कृतजगत: संवर्धनाय टीकानां महती भूमिका वर्तते। 'यथासम्भवमर्थस्य टीकनं टीका' राजशेखरेण उक्तं टीकाया: लक्षणमिदं सार्थकं कुर्वन् टीकाग्रन्था: ग्रन्थकाराश्च संस्कृतवाङ्मयपरम्परां समृद्धं कृतवन्त:। आचार्य: गोवर्धनमिश्रोऽपि अस्यां शृङ्खलायां परिगण्यते। अत: साम्प्रतम् अस्माकं कर्तव्यं वर्तते यत् अस्माभि: संस्कृतजगत: टीकानां टीकाकाराणां च प्रकाशनं समाजपुरस्सरं करणीयम् इति। प्रस्तुतं शोधपत्रमिदं विषयेऽस्मिन् यथाशक्ति कृतलघुप्रयासरूपेण प्रस्तूयते।

**सन्दर्भग्रन्थसूची-**


- किरणावलीभास्कर, पद्मनाभ मिश्र, सं. गोपीनाथ कविराज, बनारस : सरस्वती भवन टेक्स्ट्स, १९२०.
- A history of Indian logic] S-C- Vidyabhooshan, Delhi: Motilal banarasi das publishers Pvt- Limited, 2002.


1. Introduction of Tarkabhāshā (With the commentary Prakāśa of Govardhana)
2. A history of Indian logic - Page 391

- Encyclopedia of Indian Philosophies (Vol- xiii), karl H- Potter] Varanasi: Motilal banarasi das] 1995.
- Introduction of Tarkabhasha (with the commentary prakasa of Govardhana), Keshav Mishra] Ed- By Shivam mahadeo paranjape] Delhi% Chaukhamba Sanskrit prakashan
- New Catalogus Catalogorum: An Alphabetical Register of Sanskrit and Allied Works and Authors (20 Vols)] By V- Raghavan, K- Kunjunni Raja, C-S- Sundaram etc- Chennai: University of Madras, 1949 to 2006-
- Tarksangraha of Annambhatta (English translation with notes)] Ed- By V-N- Jha] Ernakulam kerala% chinmaya international foundation shodh sansthan adi sankara nilayam] 2010.


* * *

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# मल्लिनाथेन जीवातौ निर्दिष्टानां तिङन्तविवेचनस्थलानां महत्त्वतारतम्यात् स्वरूपवैविध्यम्

रजनी *

व्याख्याकारो मल्लिनाथो यदा जीवातौ श्लोकगतानां तिङन्तपदानां विवेचने प्रवर्तते तदा तिङन्तस्वरूपे प्रसिद्धाप्रसिद्धरूपभेदं विचार्य्य विविधां सरणीमाश्रयते। यत्पदमञ्जसा बोद्धुं शक्यते तत्केवलं सामान्येन निर्देशेन संसूचयति, यत्र च अन्वयदृष्ट्या काठिन्यमनुभवति यद्वा किमपि अप्रसिद्धं तिङन्तं समक्षमुपलभते तत्र यथावश्यकतां व्युत्पत्त्यादिकं प्रस्तौति। व्युत्पत्तिप्रदर्शनेऽपि विविधा शैली दृश्यते। तद्यथा क्वचिद् धातुनिर्देशमात्रं करोति, क्वचिद् धातुपाठीयेन अर्थनिर्देशेन सह धातुमुपस्थापयति, क्वचित् कार्यभेदं दर्शयितुं गणनिर्देशमपि कुरुते, क्वचित् प्रसङ्गात् प्रसिद्धार्थाद् भिन्नेऽर्थे धात्वर्थनिर्देशमपि करोति, क्वचिद् व्याख्येयतिङन्तरूपे लकारविशेषं विलोक्य लकारविधायकं सूत्रविशेषम् उपन्यस्यति, क्वचिद् विवेचनप्रसङ्गे, कर्त्तरि, कर्मणि, भावे, कर्मकर्त्तरि वा लकार इति प्रयोगानुगुण्येन तथा निर्दिशति यथा वाक्यार्थः स्फीततया सङ्गतस्स्यात्। यत्र केवलं धातुविषयकस्संदेहः कस्य धातोरिदं रूपं स्यादित्याकारस्संदेहस्सम्भाव्यते तत्र धातुविशेषनिर्देशेन पाठकसंदेहमपनयति। तद्यथा-**धयति**[1], **धयामि**[2], **उदीता**[3], **नह्यति**[4], **छुप्ता**[5], **अगात्**[6], **अगाताम्**[7], **अचिकित्सद्**[8] इत्यादिषु धातुनिर्देशं करोति। तद्यथा- **'धयति'** इत्यत्र धेटो लट् इति, **'धयामि'** इत्यत्र 'धेट् पाने' इति निर्दिशति। एवमेव

---

* शोधच्छात्रा, व्याकरणविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली-110016

1. पिबति। धेटो लट्। श्लो.सं.(१९.२९)
2. पिबामि। धेट् पाने इत्यस्य भविष्यत्सामीप्ये लट्। श्लो.सं.(१८.५६)
3. 'उदीते'ति ईङ् गताविति दीर्घेण 'ई' धातुना निष्पन्नम्। श्लो.सं.(६.५२)
4. बध्नाति। 'णह बन्धने' इति धातुः। श्लो.सं.(२१.१०३)
5. छुप्तेन स्पृष्टेन,क्षुप्तेति क्वचित्पाठः। 'छुपस्पर्शे'अयं पकारान्तस्तौदादिकोऽनिटश्च। श्लो.सं.(१८.१४३)
6. अगच्छत्। इणो गा लुङ्। श्लो.सं.(१८.७४)
7. 'इणो गा लुङि' इति गादेशः। श्लो.सं.(७.२२)
8. चिकित्सां कृतवान्। कित निवासे इति धातोर्व्याधिप्रतीकारे अर्थे 'गुप्तिज्किद्भ्यः सन्' इति सन्। स्वार्थिकः सन्।श्लो.सं.(१६.१८)

टीकायां बहूनि उदाहरणानि[1] द्रष्टुं शक्यन्ते।

यत्र तिङन्तरूपं विलोक्य गणसम्बन्धीविभ्रमः तेन अन्वभावि तत्र तादृशं भ्रममपाकर्तुं गणनिर्देशोऽपि कृतो येन गणभेदेन एकस्यापि धातोः यद्रूपवैविध्यं दृश्यते तादृशो भ्रमो निराकृतस्स्यात्। तद्यथा- **'बोधतः स्म'**[2] इति प्रयोगे दृश्यमानः **'बोधतः'** इति प्रयोगे भ्वादिगणीयस्य 'बुध्' धातोः विद्यते अथवा गणान्तरस्य रूपमिति संदेहं निराकर्तुं मल्लिनाथः **'बोधतेः भौवादिकाद् भूते लट् स्मे इति लट्'** इति वाक्यं प्रयुङ्क्ते। एवमेव **'बुबुधुः'**[3] इति प्रयोगे बुधेः भौवादिकाल्लिट् इति निर्दिशति। **'नीलति'**[4] इति प्रयोगः कथङ्कारं सिद्ध्यति इति जिज्ञासायां स स्वयं गणनिर्देशमुखेन समाधत्ते- 'नील वर्णे' इति **धातोः भौवादिकाल्लट्** इति। मल्लिनाथो जीवातौ तत्र तत्र गणनिर्देशेन तिङन्तस्वरूपं स्पष्टयति तेषां संग्रहोऽत्र[5] द्रष्टुं शक्यते।

मल्लिनाथेन तिङन्तविशेषाणां कर्त्तरि, कर्मणि, भावे, कर्मकर्त्तरि वा प्रयोग इति भ्रमं निराकर्तुं विवेचनवाक्ये लकारार्थनिर्धारणाय कर्त्तरि लट्, कर्मणि लट्, भावे

1. **सन्दर्भ्यते** - संगुम्फ्यते। **दृभ** - ग्रन्थ इति धातोः कर्मणि लट्। श्लो.सं. (३.४९), **जिह्रेति** - लज्जत, ह्री लज्जायामिति धातोर्लट्, श्लावि' ति द्विर्भावः। श्लो.सं. (३.४३), **चकरे** - कीर्णम्, 'कृ विक्षेपे' इति धातोः कर्मणि लिट्। श्लो.सं.(२१.१२), **उद्दिशताम्** - 'दिश अतिसर्जने' इत्यस्माद्धातोर्लोटि रूपम्। श्लो.सं. (२१.५२), **विश्राणय** - वितर। श्रण दान इति चौरादिकाल्लोट्। श्लो.सं.(९.११२), **अपूपुरत्** - पूरितवती 'पूरी पूरण' इति चौरादिकस्य धातोरल्लोपित्वात् 'नाग्लोपिशास्वृदिताम्' इत्युपधाह्रस्वनिषेधः। अभ्यासह्रस्वः। श्लो.सं.(६.८६), **आस्फोटि** - स्फुट भेदन इति धातोः चौरादिकात् कर्मणि लुङ्। श्लो.सं. (१०.११०), **निरमासीत्** - कल्पितवान्। मा माने इति धातोरदादिकाल्लुङ्। श्लो.सं.(२१.३३)।
2. अबुध्यताम्। बोधतेर्भौवादिकात् भूते 'लट् स्मे' इति लट्। श्लो.सं.(१८.१०८)
3. ददृशुः इत्यर्थः , बुधेर्भौवादिकाल्लिट् । श्लो.सं.(१७.१९)
4. नीलवर्ण भवति। 'नील वर्णे' इति धातोः भौवादिकाल्लट् । श्लो.सं.(१९.३१)
5. **रज्यते स्म** - रञ्जेर्दैवादिकाल्लट्। श्लो.सं. (१.३४), **अनुरज्यते** - रञ्जेर्दैवादिकात् स्वरितेन कर्त्तरि लट्। श्लो.सं. (९.५४), **ध्रिये** - स्थास्ये। धृङ् अवस्थाने इति धातोस्तौदादिकात् प्राप्तकाले कर्त्तरि। 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। श्लो.सं. (९.१४९), **शिष्ये** - शिष असर्वोपयोग इति धातोर्दैवादिकात् प्राप्तकाले कर्त्तरि लट्। श्लो.सं.(९.१४९), **परिमार्जयामि** - परिमार्ज्मि, मृजेश्चौरादिकाल्लट्। श्लो. सं. (९.१०६), **वीरयसे** - 'वीर शूरविक्रान्तौ' इति चौरादिकाल्लट्। श्लो.सं.(१२.२७), **विधुनासि**- अपनयसि, धूञ् कम्पने इत्यस्मात् क्रैयादिकात् सिपि 'प्वादीनां ह्रस्वः'। श्लो.सं. (२१.१०१), **आनर्च**-अर्चयामास, स्तवैः पुष्पाञ्जलिभिश्च पूजयामासेत्यर्थः। अर्चेर्भौवादिकाल्लिटि, 'अत आदेः' इत्यभ्यासदीर्घः तस्यानर्च। श्लो.सं.(१४.६), **रह** - त्यज, रहेर्भौवादिकाल्लोटि सिप्। श्लो.सं.(१९.२५), **अर्जतु** - भजतु। अर्जेर्भौवादिकाल्लोट्। श्लो.सं. (९.११७), **महतु**- मह पूजायामिति धातोर्भौवादिकाल्लोट्। श्लो.सं. (११.१२२), **अनुरज** - अनुरज्यस्व, रञ्जेर्भौवादिकाल्लोटि सिप् 'रञ्जेश्च' तत्युपधानकारस्य लोपः। श्लो.सं. (११.७७), **वर्द्धयतु**- 'वृधुच्छेदनपूरणयो' रिति। चौरादिकाल्लोट्।श्लो.सं.(१३.२५), आकृषत् - आचकर्ष, कृषेस्तौदादिकाल्लङ्।श्लो.सं.(१६.५१), अववरत्-वृणोति स्मः। वरयतेश्चौरादिकात् ईप्सायाम् अदन्ताल्लङ्, अग्लोपत्वेनासन्वद्भावादिद्वित्वदीर्घयोरभावः।श्लो.सं.(१७.११८), अकथि- अवादि, कथेश्चौरादिकात् कर्मणि लुङ् , मित्त्वात् ह्रस्वत्वम्।श्लो.सं.(१७.४), अचेतयत् -अबोधयत्। चेततेर्भौवादिकात् णिच्। हेतुमण्णिच्।श्लो.सं.(६.१७), अभ्यवीवदम्-अभिवादितवान्। वदेरभिवादनार्थाच्चौरादिकात् ण्यन्ताच्चङि 'णौ चङ्युपधाया ह्रस्वः ' इति उपधाह्रस्वः। हेतुमण्णिच्।श्लो.सं.(२०.१५)

लट्, कर्मकर्त्तरि लट् इत्येवं रीत्या निर्देशः कृतः। एवं निर्देशेन वाक्यार्थस्सङ्गमनं सारल्येन जायते। तद्यथा- **स्थीयते**[1], **प्रभूयते**[2], **विलप्यते**[3], **विपद्यते**[4], **आमुद्यते**[5], **उपसद्यते**[6], **शुभ्यते**[7] इत्यादिषु भावे लट्। **चस्खले**[8], **तस्थे**[9], **प्रतस्थे**[10], **ललज्जे**[11], **प्रसेदे**[12], **जज्ञे**[13], **ममज्जे**[14], **शेके**[15], **उच्चकृषे**[16], **व्यवदधे**[17], **यये**[18], **सस्ने**[19] इत्यादिषु स्थलेषु भावे लिट् इति निर्दिशति। **शिष्ये**[20], **ख्यापयिता**[21], **पाता**[22], **विनिर्ममे**[23], **उदीये**[24], **निजुह्नुवे**[25], **अनुरज्यते**[26] इत्यादिषु कर्त्तरि लकारो निर्दिश्यते। इत्थमेव **सन्दभ्र्यते**[27], **विलिप्यते**[28], **अधिक्रियेे**[29], **जगे**[30], **ददृशे**[31], **भेजे**[32], **सन्दिदिशे**[33],

1. वृत्यते। भावे लकारः। श्लो. सं. (२१.८५)
2. भावे लट्। श्लो. सं. (२.१३)
3. भावे लट्। श्लो. सं. (९.१०३)
4. खिद्यते सदेर्भावे लट्। श्लो. सं. (४.१०८)
5. सन्तुष्यते, सद्गन्धविशिष्टीभूयते, मुद्यतेर्भावे लट्। श्लो. सं. (१४.५)
6. सन्निकृष्यते, सीदतेर्भावे लट्। श्लो. सं. (१८.१४५)
7. दीप्यते, प्रतीयते इत्यर्थः, शुभेर्भावे लट्। श्लो. सं. (१९.३७)
8. स्खलितम्, पतितमित्यर्थः, भावे लिट्। श्लो. सं. (१७.१६४)
9. स्थितं तिष्ठतेर्भावे लिट्। श्लो. सं.(१.३७)
10. प्रस्थितं भावे लिट्। श्लो. सं. (८.८६), सङ्गतकरणे तङ्। श्लो. स. (१६.१)
11. लज्जितं भावे लिट्। श्लो. सं. (८.३)
12. प्रसन्नं भावे लिट्। श्लो.सं. (३.८९)
13. जातं भावे लिट्। श्लो.सं. (१२.१०४)
14. भावे लिट्। श्लो.सं. (११.२)
15. शक्तम्। भावे लिट्। श्लो.सं.(२०.१५६)
16. भावे लिट्। श्लो.सं. (७.१४)
17. भावे लिट्। श्लो.सं. (३.१३१)
18. यातेर्भावे लिट्। श्लो. सं. (१०.१०)
19. स्नातं स्नातेर्भावे लिट्। श्लो. सं. (१५.८९)
20. शिष असर्वोपयोग इति धातोर्दैवादिकात् प्राप्तकाले कर्त्तरि लट् । श्लो.सं.(९.१४९)
21. ख्यापयिष्यति , कर्त्तरि लुट् । श्लो.सं.(१०.११८)
22. पास्यति , पिबतेः कर्त्तरि लुट् ।श्लो.सं.(११.१०९)
23. निर्मितवान् । माङः कर्त्तरि लिट् । श्लो.सं.(२.४९)
24. उत्पन्नम्। इण् गतौ कर्त्तरि लिट् । श्लो.सं.(५.३९)
25. अपह्नुतवान् , ह्नुतेः कर्त्तरि लिट् । श्लो.सं.(१४.६१)
26. रञ्जेर्दैवादिकात् स्वरितेन कर्त्तरि लट् ।श्लो.सं.(९.५४)
27. संगुम्फ्यते। दृभ- ग्रन्थ इति धातोः कर्मणि लट् । श्लो.सं.(३.४९)
28. कर्मणि लट् । श्लो.सं.(९.१०३)
29. विनियुज्ये , अनियोज्य इत्यर्थः । करोतेः कर्मणि लट् ।श्लो.सं.(३.७३)
30. ऊचे , वक्ष्यमाणं वच इति शेषः । कर्मणि लिट् । अविवक्षितकर्मत्वाद्भावे लिट् । श्लो.सं.(२०.३७)
31. दृष्टम् , दृशेः कर्मणि लिट् ।श्लो.सं.(१६.६२)
32. भजेः कर्मणि लिट् । श्लो.सं.(११.६४)
33. सन्दिष्टः । कर्मणि लिट् ।श्लो.सं.(६.७८)

**चकरे[1], आपे[2], तेने[3], अभिदधे[4], नेष्यते[5], पर्यव्रियत[6], अवादि[7], अखानि[8], अचुम्बि[9], अलम्भि[10], व्यस्मारिषि[11], निरैक्षि[12], अशिक्षि[13], अबोधि[14], आर्जि[15], अदर्शि[16], प्रैक्षि[17], व्यलोकि[18], अनायि[19], अभ्यमानि[20], अतोषि[21], अन्वमानि[22], अध्यासि[23], अजनि[24], अस्पर्शि[25], अकर्त्ति[26], अपृच्छि[27], औज्झि[28], प्रौञ्छि[29], अलक्षि[30], व्यरचि[31], अतर्कि[32],**

---

1. कीर्णम्, 'कॄ विक्षेपे' इति धातोः कर्मणि लिट्। श्लो.सं.(२१.१२)
2. प्राप्तः। आप्नोतेः कर्मणि लिट्। श्लो. सं. (७.२५)
3. वितेने तनोतेः कर्मणि लिट्। श्लो. सं .(२.१०८)
4. अभिहिता , कर्मणि लिट्। श्लो. सं. (१६.३८)
5. नयतेः कर्मणि लृट्। श्लो. सं. (१२.१०५)
6. परिवृतः, वृणोतेः कर्मणि लङ्। श्लो. सं. (२.५)
7. उदितम्, कर्मणि लुङ्। श्लो. सं. (१६.६१), उदिता, वदेः कर्मणि लुङ्। श्लो. सं. (१३.१३), उक्तः। वदेः कर्मणि लुङ् श्लो. सं. (१.१२९), उक्तम्। कर्मणि लुङ्। श्लो. सं. (१०.११३)।
8. खातः, खनतेः कर्मणि लुङ्। श्लो.सं.(१२.८)
9. चुम्बिता, कर्मणि लुङ्। श्लो. सं. (१८.१०१)
10. प्राप्तः। 'चिण्भावकर्मणो' रिति लभेः कर्मणि लुङि चिण्। 'विभाषा चिण्णमुलोः' इत्युपसृष्टाद्वैभाषिको नुमागमः। श्लो. सं. (१०.२६)
11. विस्मृतः अस्मि। स्मरतेः कर्मणि लुङ्। 'स्यसिच्सीयुट्' इत्यादिना सिच इडागमे तस्य चिण्वद्भावे 'अचो ञ्णिति' इति वृद्धिः। श्लो. सं. (२०.३२)
12. दृष्टा, ईक्षतेः कर्मणि लुङ्। श्लो. सं. (१४.२१), निरीक्षितः। कर्मणि लुङ्। श्लो. सं. (२.७०)
13. शिक्षितमभ्यस्तम्। कर्मणि लुङ्। श्लो. सं. (१.७७)
14. बुद्धम्, कर्मणि लुङ्। श्लो. सं. (९.५४)
15. प्रापि। कर्मणि लुङ्। श्लो.सं.(७.२)
16. सर्व कर्मणि लुङ्। श्लो. सं. (१०.५६)
17. प्रेक्षितः। ईक्षतेः कर्मणि लुङ्। श्लो.सं.(६.३०)
18. विलोकिता। कर्मणि लुङ्। श्लो.सं.(६.४७)
19. स्वविषयतां नीता दृष्टेत्यर्थः। नयते कर्मणि लुङ्। श्लो.सं.(२.४०), नयतेर्द्विकर्मकत्वात् प्रधाने कर्मणि लुङ्। श्लो. सं. (८.२५)
20. अभिमेने। मन्यतेः कर्मणि लुङ्। श्लो.सं.(७.१)
21. तोषितः, तोषयतेः कर्मणि लुङ्। श्लो. सं. (१६.१०५)
22. अनुमोदितः, कर्मणि लुङ्। श्लो. सं. (१०.६६)
23. अध्यासितम्, आसेरधिपूर्वात् कर्मणि लुङ्। श्लो. सं. (१२.१७), सर्व कर्मणि लुङ्। श्लो.सं.(१०.५६)
24. जाता, जनेः कर्मणि 'चिणो लुक्। श्लो. सं. (३.१००)
25. स्पृष्टः। कर्मणि लुङ्। श्लो. सं. (६.४७)
26. कृति छेदने इति धातोः कर्मणि लुङ्। श्लो. सं. (१७.१६५)
27. पृच्छेर्दुहादित्वादप्रधाने कर्मणि लुङ्। श्लो. सं. (४.१२२)
28. उज्झ विसर्गे कर्मणि लुङ्। श्लो. सं. (७.१८)
29. प्रोञ्छितम्, परित्यक्तमिति यावत्। उञ्छतेः कर्मणि लुङ्। श्लो. सं. (१७.१३५)
30. सर्व कर्मणि लुङ्। श्लो. सं. (१०.५६)
31. कर्मणि लुङ्। श्लो. सं. (२.१०६)
32. तर्कितः। कर्मणि लुङ्। श्लो. सं. (६.४७)

**आच्छादि**[1], **समाकलि**[2], **आस्फोटि**[3], **व्यश्राणि**[4], **प्रापि**[5], **अकारि**[6], **अवाचि**[7], **असावि**[8], **आख्यायि**[9], **अधायि**[10], **निरमायि**[11], **अमायि**[12], **अहायि**[13], **अभेदि**[14] इत्यादिषु स्फुटं कर्मणि लकारस्तथा **रज्यति**[15], **अभेदि**[16] इत्युभयोस्स्थलयोः कर्मकर्त्तरि लकारो निर्दिष्टो येन अर्थावबोधने वाक्ये पदानां अन्वयविधाने च सौकर्यं स्यात्। तद्यथा–**'रज्यति'** इत्यादौ स्वयमेव रक्ता भवति इत्यर्थे **'कुषिरजोः प्राचां श्यन् परस्मैपदञ्च'** इति कर्मकर्त्तरिरूपमिति लिखति। **'अभेदि'** इति रूपव्युत्पादनप्रसङ्गे मल्लिनाथो न केवलं प्रक्रियां दर्शयति अपितु तङादिकार्यं कथं कर्मकर्ता इति च कथं भवति इत्यस्य समाधानं करोति। तद्यथा–**स्वयमेव भिद्यते स्म। 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्तुः कर्मवद्भावात् 'कर्मकर्तरि लुङ्'। तङादिकार्यं 'यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्' इति वचनात्। 'क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति। सुकरैः स्वगुणैर्यस्मात् कर्मकर्तेति तं विदुः'॥**

मल्लिनाथः तिङन्तपदानां व्याकरणदृष्ट्या विवेचनावसरे न केवलमर्थसामान्यं निर्दिश्य लकारं वदति अपितु बहुषु स्थलेषु लकारविधायकं शास्त्रं तात्पर्यसूचनमुखेन उपस्थापयति।[17] तद्यथा– **'पुरा भवति'**[18] इत्यत्र **'भविष्यतीत्यर्थः। यावत् पुरानिपातयोर्लट्' इति पुराशब्दयोगात् भविष्यदर्थे लट्'** इत्येवं वाक्यं प्रयुङ्क्ते। एवंविधान्येव

---

1. छादिता, छादयतेः कर्मणि लुङ्। श्लो. सं. (१५.१७)
2. सम्यक् अबोधि। कलयतेः कर्मणि लुङ् । श्लो. सं. (१८.७१)
3. स्फुट भेदन इति धातोः चौरादिकात् कर्मणि लुङ्। श्लो. सं. (१०.११०)
4. व्यश्राणित, प्रदत्त इत्यर्थः। श्रण दाने इत्यस्य कर्मणि चिण्। श्लो. सं. (१९.६३)
5. आप्नोतेः कर्मणि लुङ्। श्लो.सं.(२.१२)
6. कृतः, श्रुतः इत्यर्थः। करोतेः कर्मणि लुङ्। श्लो. सं. (१.४४)
7. वचेर्ब्रूञो वा कर्मणि लुङ्। श्लो. सं. (५.४९), उक्ता। वचेः कर्मणि लुङ्। श्लो. सं. (२०.१४)
8. सूता। सूतेः कर्मणि लुङ्। श्लो. सं.(९.२६)
9. ख्यातेः कर्मणि लुङ्। चिणो युगागमः श्लो.सं.(९.६६)
10. आहता। दधातेः कर्मणि लुङ्। 'आतो युक् चिण्कृतोः' इति युगागमः। श्लो. सं. (६.६१), निहितम्, धाञः कर्मणि लुङ्। 'आतो युक्चिण्कृतोः' इति युगागमः। श्लो. सं. (७.९९)
11. निर्मिता, माङो लुङि 'आतो युक् चिण्कृतोः' इति युगागमः। श्लो. सं. (१०.८६)
12. अनुमिता। माङः कर्मणि लुङ् चिणि युगागमः। श्लो.सं.(२०.७०)
13. अत्याजि। हातेः कर्मणि लुङ् , चिणि युगागमः। श्लो.सं.(१६.१९)
14. भिन्नम्। कर्मणि लुङ्। श्लो. सं. (१.४६)
15. श्लो. सं. (३.१२०)
16. श्लो. सं. (५.३७)
17. श्लो. सं. (१.१८)
18. श्लो. सं. (१.१८)

नैकान्युदाहरणानि बहुत्र[1] दरीदृश्यन्ते टीकायाम्। एतेन तस्य लकारविधायकशास्त्राणां कियान् अभ्यास इति स्फुटं प्रतीयते।

मल्लिनाथः सामान्यतः तिङन्तरूपाणां विवरणं लकार-पुरुष-वचननिर्देशेन तथा करोति यथा तत्परिज्ञानं स्फुटं समेषां जायेत। तद्यथा-**'वश्मि'**[2] इति तिङन्तपदस्य विवेचनं

1. **स्फुटति** - 'आशंसायां भूतवच्च' इति चकारादाशंसायां भविष्यदर्थे वर्तमानवत्प्रत्ययः। श्लो.सं.(९.१२५), **जयामि** - जेष्यामीत्यर्थः। आशंसायां वर्तमानवत्प्रत्ययः। श्लो.सं.(१.१४७), **दुनोति** - यावत्पुरानिपातयोर्लट्। श्लो.सं.(२.९३), **तनुते स्म** - चकारेति। ' लट् स्मे ' इति भूते लट्। श्लो.सं.(४.२), **करोति** - चकार करिष्यति च। 'यावत्पुरानिपातयोर्लट्'। श्लो.सं.(१९.२०), **अहङ्क्रियते स्म** - अहङ्करोतेर्भावे लट् ' लट् स्मे' इति भूते लट्। श्लो.सं.(१२.८३), **ब्रवीति** - वर्तमानसामीप्ये भूते लट्। श्लो.सं.(१२.५१), **आह** - उक्तवान् , 'पुरि लुङ् चास्मे' इति भूते लट्। श्लो.सं.(१०.७०), **आहुः स्म** - ऊचुः, 'लट् स्मे' इति भूते लट्। श्लो.सं.(१०.४६), **आह स्म** - 'लट् स्मे' इति भूते लट्। श्लो. सं. (९.१७), **आह स्म** - 'लट् स्मे' इति भूते लट्। श्लो.सं.(१३.४०), **आह स्म** - उवाच, 'लट् स्मे' इति भूते लट्। श्लो.सं.(१६.९६), **अस्ति** - 'पुरि लङ् चास्मे' इति भूते लट्। श्लो. सं. (२१.२२), **आस्ते** - आसिष्यते , भविष्यतीत्यर्थः, आसेर्भविष्यदर्थे 'यावत् पुरानिपातयोर्लट्' इति भविष्यदर्थे लट्। श्लो.सं.(१४.७२), रोदिति-अरुदत्, 'पुरि लुङ् चास्मे' इति चकारात् पुराशब्दयोगे भूतानद्यतनार्थे लट्। श्लो.सं.(११.११५), **यासि** - यास्यसि , 'यावत्पुरा-' इति भविष्यति लट्। श्लो.सं.(१७.१५३), **उपैषि** - उपैष्यसि 'यावत्पुरानिपातयोर्लट्'। श्लो.सं. (३.१३), **विदध्महे** - कुर्महे , इत्याह स्म च उवाच च , 'लट् स्मे' इति भूते लट्। श्लो.सं.(१५.७), **स्मरसि** - 'अभिज्ञावचने लृट्' इति भूतार्थे लृट् । श्लो.सं.(२०.७४), **वक्ष्यसि** - 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यमर्षार्थे वचेर्लृट्। श्लो.सं.(१७.११५), **भवतु** - सम्भावनायां लोट्। श्लो. सं.(९.९६), **प्रभवन्तु** - शक्नुवन्तु। सम्भावनायां लोट्। श्लो.सं.(८.२), **प्रवितरन्तु** - दद्युः , सम्भावनायां लोट् । श्लो. सं. (११.१२६), **वितराम** - प्रयच्छाम , सम्प्रश्ने लोट् । श्लो.सं.(१४.९०), **रज्यस्व** - अनुरक्ता भव । प्रार्थनायां लोट्। श्लो.सं.(६.८४), **निमज्जतु** - सम्भावनायां लोट्। श्लो.सं.(४.५२), **इच्छतु** - सम्भावनायां लोट्। श्लो. सं. (२.२०), **उपविशतु** - आस्तां प्रार्थनायां लोट् । श्लो.सं.(१६.५०), **किरतु** - क्षिपतु। प्रार्थनायां लोट्। श्लो.सं.(९.९३), **कथासु शिष्यध्वम्** - कथामात्रशेषाभावः। कुत्रापि पित्रोरदर्शनाद् म्रियध्वम्, प्राप्तकाले लोट् , मरणकालः प्राप्त इत्यर्थः। श्लो. सं. (१.१४२), **वितनोतु**-तनोत्वेत्यर्थः। सम्भावनायां लोट्। श्लो.सं.(४.११), **करवाणि** - कुर्याम्। विध्यर्थे लोट्। 'आडुत्तमस्य पिच्च' इति मेर्निः। श्लो.सं. (५.२३), **एतु** - सम्भावनायां लोट्। श्लो.सं.(२.३९), **यातु** - सम्भावनायां लोट्। श्लो. सं. (३.५८), **सन्तु** - सम्भावनायां लोट्। श्लो.सं.(३.७८), **अस्तु** - सम्भावनायां लोट्। श्लो. सं.(१३.४९), **उदेतु** - उत्पद्यताम् , सम्भावनायां लोट्। श्लो.सं.(११.११६), **हन्तुम्** - व्याघातयितुम् , सम्प्रश्ने लोट्। श्लो.सं.(१४.४१), **उपैतु** - प्राप्तकाले लोट्। श्लो. सं. (४.७), **अदास्यन्** - क्रियातिपत्तौ लङ्। श्लो. सं. (६.२७), **अशकुनीभवेत्** - 'अभूततद्भावे च्विः' विध्यादिसूत्रेण प्रार्थने लिङ्। श्लो. सं. (३.९), भायाः, **भायात्** - भातेराशिषि लिङ्। श्लो.सं.(३.११७), **स्यात्** - 'शकि लिङ्' इति शक्यार्थे लिङ्। श्लो. सं. (४.११६), **स्याम्** - भवेयं 'प्रार्थनायां लिङ्'। श्लो. सं. (१०.१०२), **मास्म भूः** - नैव भव। ' स्मोत्तरे लङ् च' इति चकाराल्लुङ् , 'न माङ् योगे' इत्यडभावः। श्लो.सं.(१९.२४), **उदास्यत्**-क्रियातिपत्तौ लृङ्। श्लो.सं.(८.५), **अदास्यन्** - क्रियातिपत्तौ लृङ्। श्लो.सं.(६.२७), **निरमास्यत** - यदि निर्मिमीते चेत्, 'माङः क्रियातिपत्तौ लृङ्। श्लो.सं.(११.३), **त्रुटति** - छिनत्ति, विच्छिन्ना इत्यर्थः। 'पुरिलुङ् चास्मे' इति भूते लट्। श्लो.सं.(१८.१८), **विदुः स्म** - 'विदो लटो वा' इति लिट् 'झेर्जुस्' इति जुसादेशः, 'लट् स्मे' इति भूते लट्। श्लो.सं.(११.१२), **उपश्लोकयति स्म** - 'सत्यापपाश -' इति णिच्। स्मयोगे भूते लट्। स्वार्थिको णिच्। श्लो.सं.(२२.२)।
2. कामये । वश कान्तावित्यस्य लडुत्तमपुरुषैकवचनम्। श्लो.सं.(२१.६०)

कुर्वता तेन लिखितं **'वश कान्तौ'** इत्यस्य लडुत्तमपुरुषैकवचनम्। **'अवेत'**[1] इति तिङन्तं विवेचयन् तेन **अवपूर्वादिणो मध्यमपुरुषबहुवचनम्** इति लिखितम्। एवमेव **'पायाः'**[2] इत्यस्य विवेचनं करोति **'पा रक्षणे' इत्यस्य लिङो मध्यमपुरुषैकवचनम्।**

मल्लिनाथो बहुषु तिङन्तस्थलेषु स्फुटं व्युत्पत्त्यादिप्रदर्शनं कृत्वा रूपसिद्धिं दर्शयति। तद्यथा- **'आजुहाव'**[3] इति पदं व्युत्पादयन् स स्वयं लिखति- **आहूतवान् ह्वयतेर्लिटि 'अभ्यस्तस्य च'** इति द्विर्भावात्प्राक् सम्प्रसारणे रूपसिद्धिः। एवमेव **'असोढा'**[4] इत्यत्र तु सम्पूर्णामपि सिद्धिप्रक्रियां दर्शयति। तद्यथा- **असहिष्णुरिव सन्, अक्षमः सन्नित्यर्थः। सहेः तृनि 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'ष्टुना ष्टुः' इति धस्य ढत्वे, 'ढो ढे लोपः' इति प्रथमढलोपे 'सहिवहोरोदवर्णस्य' इति ओत्वम्। 'पर्यणंसीत्'**[5] इत्यत्रापि स्वप्रक्रियाबोधदाक्ष्यं बोधयितुं सम्पूर्णामपि सिद्धिक्रमं दर्शयति। तद्यथा- **तद्रूपेण आसीदित्यर्थः। णमेर्लुङ् 'अस्तिसिचोऽऽपृक्ते' इतीडागमः 'यमरमनमातां सक् च' इति सक् इडागमश्च 'इट ईटि' इति सिचो लोपः, 'उपसर्गादसमासेऽपि' णोपदेशस्य इति णत्वम्। 'व्यनेशन्'**[6] इति रूपं प्रक्रियाबोधनद्वारा मल्लिाथः तथा स्पष्टयति यथा तद्गतप्रक्रियाजातं स्फुटं ज्ञातं स्यात्। अत्रैव पाठभेदमपि आदाय रूपान्तरमपि शब्दशास्त्रपद्धत्या व्युत्पादितम्। तद्यथा- **विनष्टाः, नशेर्लुङि पुषादित्वादङ्, 'नशिमन्योरलिटि एत्वं वक्तव्यम्' इत्येत्वम्। 'विनेशु' रिति पाठे लिट्यनादेशादित्वात् 'अत एकहल्मध्येऽनादेशादेर्लिटि' इति एत्वाभ्यासलोपौ। 'चतुर्दशजगज्जनतानमस्या'**[7] इति पदमपि व्युत्पादयता मल्लिनाथेन साधुव्युत्पत्तिः प्रकाशिता। तद्यथा- **चतुर्दशानां जगतां समाहारश्चतुर्दशजगत् तत्र जनतायाः जनसमूहानाम्, नमस्या नमस्कार्या 'नमोवरिव -' इति क्यचि धातुसंज्ञामचो यत्, 'क्यस्य विभाषा' इति क्यचो लोपः।**

मल्लिनाथः प्रायः तिङन्तपदव्युत्पादनाय प्रथमं तस्य पर्यायतया एकं प्रसिद्धमर्थबोधकं तादृशं पदमुपन्यस्यते येन स्फुटं तदर्थप्रतिपत्तिस्स्यादयं क्रमः तट्टीकायां सर्वत्र दरीदृश्यते। तद्यथा- **धयति**[8]- पिबति, **धयामि**[9]- पिबामि, **श्रयति**[10]- भजते स्म,

1. जानीत। अवपूर्वादिणो मध्यमपुरुषबहुवचनम्। श्लो.सं.(१७.७४)
2. रक्षेः। 'पा रक्षणे' इत्यस्य लिङो मध्यमपुरुषैकवचनम्। श्लो.सं.(२१.६२)
3. श्लो.सं.(१०.९२)
4. श्लो.सं.(२१.१३२)
5. श्लो.सं.(१०.७६)
6. श्लो.सं.(१४.५२)
7. श्लो.सं.(११.७)
8. पिबति । धेटो लट् । श्लो.सं.(१९.२९)
9. पिबामि । धेट् पाने इत्यस्य भविष्यत्सामीप्ये लट्। श्लो.सं.(१८.५६)
10. भजते स्म । ' पुरि लुङ् चास्मे ' इति चकारात् भूते लट्। श्लो.सं.(१९.५९)

**वदति स्म**[1]- उक्तवती, **नीलति**[2] - नीलवर्ण भवति, **प्रति अपालीत्**[3]- प्रत्यवोचत्, **अवात्सीत्**[4]- उवास, **अद्राक्षुः**[5]- अवालोकिषत, **आगमाम**[6]- आगताः स्मः, **अगमन्**[7]- गतवन्तः, **गमः**[8]- निर्गच्छ, **व्यषदत्**[9]- विषण्णोऽभूत् ।

इत्येवं क्रमेण सर्वत्र पर्यायपदस्य उपस्थापनेन प्रबोधने सौकर्य सम्पादितम्। एवं मल्लिनाथः तिङन्तपदानां व्युत्पादनक्रमे अनेविधां पद्धतिमवलम्बते।

* * *

1. उक्तवती, 'लट् स्मे' इति भूते लट्। श्लो.सं.(१४.३९३)
2. नीलवर्ण भवति। ' नील वर्णे ' इति धातोः भौवादिकाल्लट् । श्लो.सं.(१९.३१)
3. प्रत्यवोचत्। लपेर्लुङि 'अतो हलादेर्लघोः' इति निषेधविकल्पात् सिचि वृद्धिः। श्लो.सं.(२०.११५)
4. उवास, वसेर्लुङि सिचि , 'सः स्यार्धधातुके' इति सस्य तत्वम् , 'वदव्रज-' इत्यादिना वृद्धिः। श्लो.सं. (१७.२१४)
5. अवालोकिषत। दृशेर्लुङि 'इरितो वा' इति विकल्पादङ् भावपक्षे सिचि वृद्धिः। श्लो. सं. (१७.१४)
6. आगताः स्मः, गमेर्लुङि चेरङादेशः। श्लो. सं. (१०.११४)
7. गतवन्तः, गमेर्लुङ्, इदित्त्वात् च्लेरङादेशः। श्लो. सं. (१७.१३३)
8. निर्गच्छ, गमेर्लुङ्। 'पुषादी'त्यादिना च्लेरङादेशः। 'न माङ्योग' इत्यडागमाभावः। श्लो. सं. (६.१६)
9. विषण्णोऽभूत्,सदेर्लुङ्। लृदित्त्वाच्च्लेरङादेशः। श्लो. सं. (१२.२२)

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# बुद्धेः प्राचीनार्वाचीनावधारणायाः विमर्शः

डॉ. सविताराय*

निश्चयान्तःकरणवृत्तिः बुद्धिः इति वेदान्तसिद्धान्तानुगुणं बुद्धेः स्वरूपं विवेचितं भारतीयवाङ्मये। पाश्चात्यचिन्तकैः मनोवैज्ञानिकैः विवेचितबुद्धिस्वरूपं 'व्यक्तेः सामञ्जस्ययोग्यता' एव। यथा विविधेषु बिन्दुषु भारतीयपाश्चात्यचिन्तकाः चिन्तयन्ति तथैव बुद्धेरन्वेषणमपि तैः चिन्तितम्। पाश्चात्यमनोवैज्ञानिकैः कृतस्य बुद्धेः विवेचनस्य भारतीयचिन्तकैः कृतस्य बुद्धेः विवेचनस्य च साम्यवैषम्यविवेचनम् एव पत्रेऽस्मिन् वर्णितम् अस्ति।

## आधुनिकपाश्चात्यमनोविज्ञाने बुद्धेरवधारणा

पाश्चात्यमनोवैज्ञानिकैः बुद्धिस्वरूपसम्बन्धे अनेकानि मतानि प्रदत्तानि, अनेकसिद्धान्तानां प्रतिपादनमपि तैः कृतम्। केचन मनोवैज्ञानिकाः बुद्धिं ज्ञानस्य योग्यतात्वेन, केचन अनुभवस्य योग्यतात्वेन, केचन अमूर्त्तचिन्तनस्य योग्यतात्वेन च स्वीकुर्वन्ति। अत एव स्पष्टमस्ति यत् बुद्धेः सम्प्रत्ययस्य सन्दर्भे अत्यधिका अस्पष्टता, अनिश्चितता च विद्यमाना वर्तते।

बुद्धिः न केवलं ज्ञानस्य क्षमतात्वेन, अनुभूत्या लाभप्राप्तेः योग्यतात्वेन, अमूर्त्तचिन्तनस्य योग्यतारूपेण च परिभाषयितुं शक्यते अपितु बुद्धिः एतेषां सर्वेषां विषयाणां समुच्चयो वर्तते येन माध्यमेन व्यक्तिः सम्यक् रूपेण चिन्तनं कुर्वन् पूर्वानुभवैः लाभमवाप्य उद्देश्यपूर्णरूपेण कार्यं करोति। राबिन्सन्-महोदयानुसारेण बुद्धेः तात्पर्यं संज्ञानात्मकव्यवहाराणां सम्पूर्णसमूहेन सह अस्ति, यः मानवेषु विवेकेन सह समस्यासमाधाने, परिस्थितीनामनुकूलने, अमूर्त्तचिन्तने, स्वानुभूत्या लाभप्राप्तौ च क्षमतां प्रदर्शयति।

## प्राचीनभारतीयदर्शनेषु बुद्धेरवधारणा

भारतीयसंदर्भे बुद्धितत्त्वस्य अवगमनाय सर्वप्रथमम् अन्तःकरणतत्त्वस्य ज्ञानमावश्यकत्वेन अपेक्षितं भवति। अन्तःकरणतत्त्वस्य अवगमे सति बुद्धितत्त्वस्य

*सहायकाचार्या, शिक्षाशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नवदेहली।

ज्ञानं सम्यग् भवितुमर्हति इति भारतीयदार्शनिकानामभिमतम्। अन्तःकरणं तावत् शरीरान्तःस्थितानि इन्द्रियाणि। तच्च साक्षात् वस्तूनां ग्रहणं नैव करोति, अपि च तेषां ज्ञानं बाह्यज्ञानेन्द्रियेण कर्तुं प्रभवति। यद्यपि अन्तःकरणं मूलतः एकमेव तथापि तस्य प्रमुखा वृत्तयः मनश्चित्ताहङ्कारा इति। सांख्यसिद्धांते व्यक्तित्वस्य त्रयोदशांगानि निगदितानि। एतेषु दशबाह्य अंगानि पञ्चप्रत्यक्षणांगानि पञ्चकर्मेन्द्रियानि च। महत्, अहंकारः, मनस् च आन्तरिकांगानि। वेदान्तदर्शने अन्तःकरणस्य निश्चयात्मिका वृत्तिः बुद्धिर्भवति, संकल्पविकल्परूपसंशयात्मिका वृत्तिः मनः, स्मरण-चिन्तन-रूपादिवृत्तिः चित्तम्, गर्वरूपा वृत्तिश्च अहङ्कारो भवतीति।[1]

**बुद्धीन्द्रियाणि चक्षुः श्रोत्रघ्राणरसनत्वगारव्यानि।**
**वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्याहुः॥[2]**

सांख्यदर्शने तावत् **"अध्यवसायो बुद्धिरिति"**[3]। बुद्धेः लक्षणस्य व्याख्यानावसरे व्याख्याकाराः अध्यवसायशब्दार्थत्वेन निश्चयमेव स्वीकुर्वन्ति। अतः निश्चिनोति या सा बुद्धिः अर्थात् या निश्चयं करोति सा बुद्धिरिति। धर्मः, ज्ञानं, वैराग्यमैश्वर्यञ्च बुद्धेः सात्त्विकगुणाः, तद्विपरीतम् अधर्मः, अज्ञानम्, अवैराग्यमनैश्वर्यञ्च।[4] बुद्धेः नामान्तरं महद् भवति। कस्यापि विषयस्य सम्बन्धज्ञाने निश्चयः बुद्ध्या एव सम्भवति, बुद्धिमन्तरा तादृङ्निश्चयः नैव सम्भवति। तत्र सत्त्वगुणस्य प्राधान्यं भवति, किन्तु रजो-तमोगुणयोः विद्यमानता तत्र तिरोहितरूपेण सम्भवति।

बुद्धिर्नाम 'निश्चयात्मिकान्तःकरणवृत्तिः' अर्थाद् अन्तःकरणस्य या निश्चयात्मिका वृत्तिः भवति सा बुद्धिरेव। इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता विज्ञानमयकोश एवोच्यते। तदुक्तं विवेकचूडामणौ-

**बुद्धिर्बुद्धीन्द्रियैः सार्धं सवृत्तिः कर्त्तृलक्षणः।**
**विज्ञानमयकोशः स्यात्पुंसः संसारकारणम् ॥[5]**

भारतीयदर्शने तावत् मानवानां या मूलभूता प्रवृत्तिर्भवति तस्याः प्रवृत्तेरन्तर्गता बुद्धिः ज्ञानेन सह सम्बद्धा भवतीति। यतो ज्ञानप्राप्तेः साधनं बुद्धिरेव भवतीति भारतीयदार्शनिकानामभिमतम् अस्ति। मानवानां सामान्यग्रहणशक्तेः नाम बुद्धिः।

1. वेदान्तसारः, पृ. 140, धर्मराजा ध्वरीन्द्रेण ने वेदान्तपरिभाषायाम् अन्तःकरणस्य एतेषां भेदानां समर्थने पूर्वाचार्याणामेका कारिका उद्धृता- "मनो बुद्धिरहंकारचितं करणमान्तरम्, संशयो निश्चयो गर्वः स्मरणं विषया इमे।"
2. सांख्यकारिका - कारिका 26
3. 'अध्यवसायो बुद्धि धर्मः'-सांख्यकारिका - 23, पृ0 177
4. अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्
   सात्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् , वही, का. 23, पृ. 177
5. विवेकचूडामणिः 186

तर्क-स्मृति-निश्चयज्ञानमित्यादिकं बुद्धेः धर्मो भवति। भारतीयदर्शने विद्यमानतत्त्वस्य पञ्चकोशस्य विश्लेषणावसरे विज्ञानमयकोशेन सह इयं बुद्धिः सम्बद्धा अस्ति इति भारतीयदार्शनिकैः स्वीकृतम्।[1] धारणाशक्तिकारणत्वात् अथर्ववेदसंहितायां बुद्धिः मेधा अप्युच्यते।[2] उपनिषत्साहित्ये बुद्धेः अनेके पर्यायाः सन्ति। यथा हि ऐतरेयोपनिषदि वर्णितमस्ति-

**संज्ञानम् अज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिः मतिः मनीषा जूतिः स्मृतिः संकल्पः ऋतुः असुः कामः वशः सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति।**[3]

भारतीयदर्शनानुसारेण उपर्युक्ताः सर्वाः वृत्तयः प्रज्ञानात्मकब्रह्मणः भिन्नभिन्नरूपाणि एव सन्ति। प्रज्ञा-प्रज्ञानयोर्वा संदर्भः बहुव्यापकः। प्रज्ञायाः स्थानं बुद्धेः श्रेष्ठमस्ति। बुद्धिकारणात् व्यक्तिः स्वात्मानमेव कस्यापि कार्यस्य कर्त्तारं भोक्तारं च मत्वा सुखदुःखयुक्तो भवति। कामक्रोधलोभादीनां वृत्तिभिः सह सांसारिकतायाः बन्धने संलिप्तो भवति। एतद् विपरीता प्रज्ञावृत्तिः सत्यमार्गे प्रवर्तयित्री सांसारिकवृत्तिभ्यः मोक्षदायिनी निर्मला श्रेष्ठा च भवति। सांसारिकदुःखात् संसारवृत्तिभिः या विमुञ्चति सा श्रेष्ठबुद्धिः प्रज्ञा एव।

पाश्चात्यमनोवैज्ञानिकेषु बुद्धेः सम्प्रत्ययस्य सम्बन्धे व्यापको मतभेदो दरीदृश्यते। वर्तमाने पाश्चात्यमनोवैज्ञानिकाः बुद्धेः येषां तथ्यानां प्रकाशनं कुर्वन्ति तानि तथ्यानि भारतीयदर्शने अत्युत्कृष्टरूपेण पूर्वस्मादेव विद्यमानाः सन्ति। भारतीयदार्शनिकाः तर्क-स्मृति-निश्चय-ज्ञानमादीन् बुद्धेः धर्मः मन्वते। स्वधर्मकारणात् एव बुद्धिः समस्यासमाधाने, अमूर्तचिन्तने पूर्वानुभवैः सम्प्राप्ते लाभे, नवीनासु परिस्थितिषु समायोजने अनुकूलने च सक्षमाऽस्ति। अत एव बुद्धिः विभिन्नयोग्यतानां समुच्चयरूपा इति स्वीकृता।

**बुद्धेः भेदाः**

बुद्धिलब्धिपरीक्षणस्य विश्लेषणेन इदं ज्ञायते यत् पूर्व मनोवैज्ञानिकैः तार्किकगणितीयक्षमतामेव बुद्धिरूपेण स्वीकृतः। परन्तु वर्तमाने पाश्चात्यमनोवैज्ञानिकैः बुद्धेः विविधभेदाः प्रतिपादिताः। भारतीयदार्शनिकचिन्तने अपि बुद्धेः विविधस्वरूपस्य वर्णनं विद्यते।

1. वेदान्तसारः, पृ. 141
2. भारतीयमनोविज्ञानम्, पृ.55
3. ऐतरेयोपनिषद्, 3.1.2

## आधुनिकपाश्चात्यमनोविज्ञानम्

पाश्चात्यमनोवैज्ञानिकैः बुद्धिः प्रायः सामूहिकक्षमतारूपे परिभाषिता, परन्तु कश्चन् मनोवैज्ञानिकैः बुद्धेः पृथक् पृथक् भेदाः अपि वर्णिताः। सामान्य वा शैक्षिकबुद्धिः (Intellectual Intelligence), भावात्मकबुद्धिः, (Emotional Intelligence), आध्यात्मिकबुद्धिः (Spiritual Intelligence), शारीरिकबुद्धिः (Physical Intelligence), सर्जनात्मकबुद्धिः (Creativity Intelligence), प्रतिकूलबुद्धिः (Adversity Intelligence), नैतिकबुद्धिः (Moral Intelligence) इत्यादयः बुद्धेः विविधभेदाः। सामान्यरूपेण प्रमुखपाश्चात्यमनोवैज्ञानिकैः वर्तमाने बुद्धेः त्रिधा भेदाः स्वीकृताः ते यथा-

1. सामान्यबुद्धिः वा शैक्षिकबुद्धिः (Intellectual Intelligence)।
2. संवेगात्मकबुद्धिः वा भावात्मकबुद्धिः (Emotional Intelligence)।
3. आध्यात्मिकबुद्धिः ( Spiritual Intelligence)।

शैक्षिकबुद्धिः अस्माकं विचाराणां संयुक्ता भवति, यत् वयं कथं चिन्तयामः यस्य मूलं भौतिकम्। भावात्मकबुद्धिः अस्माकं भावनासंयुक्ता भवति, यथा वयं परिस्थितिविशेषे कथम् अनुभवामः, भावात्मकबुद्धेश्च मूलं सामाजिकं भवति। आध्यात्मिकबुद्धिः व्यक्तेः व्यवहारयुक्ता भवति अस्य मूलमाध्यात्मिकमेव। अस्य विवरणमधो वर्णिततालिकायां कृतम्। मनोवैज्ञानिकैः इदमपि स्पष्टं कृतं यत् सामान्यबुद्धेः भावात्मकबुद्धेश्च प्रभावी अनुप्रयोगाय आध्यात्मबुद्धेः समर्थनमावश्यकम्।[1] जीवने सफलतायाः निर्धारणे ये कारकाः महत्त्वपूर्णाः सन्ति तेषां सामान्यं वा शैक्षिकबुद्धेः योगदानं केवलं विंशतिप्रतिशतमेव (20) भवति। डानाजोहर अथ च इयानमार्शलमहोदयैः प्रतिपादितं( Triarchic System of intelligence, Zohar and Marshall, 2000)[2] बुद्धेः त्रिकोणीयप्रणाल्याधारेण निर्मितं सारण्याः (अनुदितं)अधोवर्णितमस्ति-

| मूलम् | बुद्धिः | कार्यम् |
|---|---|---|
| भौतिकमूलं | सामान्यबुद्धिः (IQ) | कथम् अहं चिन्तयामि |
| सामाजिकमूलं | भावात्मकबुद्धिः ( EQ) | कथम् अहम् अनुभवामि |
| आध्यात्मिकमूलं | आध्यात्मिकबुद्धिः ( SQ) | कथम् अहं व्यवहरामि |

स्रोत-https://thesystemsthinker.com/)

ई.एल.थार्नडाइकमहोदयेन प्रोच्यते यथा मूर्तबुद्धिः, अमूर्तबुद्धिः, सामाजिकबुद्धिः भेदेन त्रिधा। परन्तु अस्याः तिसृभिः बुद्धिभिः किमपि स्पष्टं सीमांकनं नास्ति। इदन्नावश्यकं यत् मनुष्ये यदि मूर्तबुद्धेः अधिकता भविष्यति, तर्हि अमूर्तबुद्धिः सामाजिकबुद्धिर्वा

1. नवीनशिक्षामनोविज्ञानम्, पृ. 375-376
2. Triarchic System of intelligence, Zohar and Marshall, 2000, https://thesystemsthinker.com/

अल्पमात्रायां भविष्यति न वा। उपर्युक्तत्रिषु प्रकारेषु मूर्तबुद्धिममूर्तबुद्धिं च शैक्षिकबुद्धेः अन्तर्गते स्थापयितुं शक्यते। सामाजिकबुद्धिं भावात्मकबुद्धेः श्रेण्यां संस्थापयितुं शक्यते। हार्वडगार्डनरमहोदयेन 'फ्रेम्स ऑफ द माइन्डः द थ्योरी ऑफ मल्टिपल इंटिलिजेंस' स्वकीयपुस्तके मापनयोग्यमानवीयक्षमताः बहुविमात्मकबुद्धेरन्तर्गते प्रस्तुताः। याः क्षमताः तार्किकगणीतीया वाचिकभाषायी अन्तर्वैक्तिका अन्तःवैयक्तिका दृष्टिमूलिका स्थानिका संगीतात्मिका शारीरिकगतिबोधिका च। आसु क्षमतासु तार्किकगणीतीया वाचिकभाषायी दृष्टिमूलिका स्थानिका संगीतात्मका शारीरिकगतिबोधिकाः च क्षमताः सामान्यबुद्धेः शैक्षिकबुद्धेर्वा मध्ये योज्यते। एवम् अन्तर्वैयक्तिकक्षमता अन्तःवैयक्तिकक्षमता च भावात्मकबुद्धिरूपेण प्रस्तुता।

हावर्डगार्डनरमहोदयेन (1990) 'इटेलिजेंस रिफ्रेम' इति नामके पुस्तके आध्यात्मिकबुद्धिविषये वर्णितं यत् आत्मनः सम्बन्धेः कश्चन अपि विचारविमर्शः यदि आध्यात्मिकजीवने, आध्यात्मिकक्षमतायाम्, आध्यात्मिकसंवेगे, धर्माय दाने, रहस्यवादे, या परानुभूतैः युतो अस्ति तथा च यदि विमर्शोऽयं भौतिकसंसारस्य माध्यमेन नास्ति तर्हि अयं विज्ञानाय सर्वदा विवादस्य विषयः। गार्डनरमहोदयेन स्वबुद्धेः सिद्धान्तेन सह कश्चन अप्रौढ़विचारस्य वा तथ्यस्य प्रस्तुतीकरणं कर्तुं न इच्छति एतदर्थं आध्यात्मिकबुद्धिः इति शब्दस्य स्थाने आस्तित्ववादीबुद्धिः( Existential Intelligence) इत्यस्य प्रयोगः कृतः।

रिचर्डवालमेनमहोदयानुसारेण (2001) आध्यात्मिकबुद्धिः सा मानवीया क्षमता अस्ति, या जीवनस्यार्थस्य सम्बन्धे निर्णायकं प्रश्नं करोति। सहैव परस्परेण तथा च यस्मिन् संसारे वयं निवसामः तेन संसारेण सह सम्बन्धस्य अनुभवं कारयति।[1] राबर्टइमान्समतानुसारम् "आध्यात्मिकबुद्धिः सरलतापूर्वकं समेषां समस्यानां समाधानम् एवं लक्ष्यनां प्राप्तेः आध्यात्मिकसूचनानामनुकूलः प्रयोगः"।[2] येन आध्यात्मिकबुद्धिः मुख्यरूपेण पञ्चतत्त्वानि स्वीकृतानि यानि इत्थं प्रकाराणि सन्ति।

1. दैहिक-भौतिकश्रेष्ठतायाः योग्यता।
2. सजगतायाः उच्चावस्थायाः अनुभवस्य योग्याता।
3. प्रतिदिवसस्य अनुभवानां सिद्ध्यर्थं योग्यता।
4. समस्यासमाधानात् आध्यात्मिकसाधनानां प्रयोगक्षमता।
5. सच्चरित्रता अथवा सद्गुणानां योग्यता।

डेविड बी. किंगमहोदयमतानुसारम् आध्यात्मिकबुद्धिं परिस्थितिविशेषस्य अनुकूले तासां योग्यशक्तीनां रूपे परिभाषयितुं शक्यते, याः सत्यस्य पराभौतिकमानवीयानुभूतीषु आधारिताः। विशेषरूपेण तासु अनुभूतीषु याः कस्यापि व्यक्तेः अस्तित्वस्य प्रकृतिः

1. https://shodhganga.inflibnet.ac.in/chapter 1, page 14
2. https://shodhganga.inflibnet.ac.in/chapter 1, page 9

व्यक्तिधारणापरानुभूती तथा चेतनायाः विस्तृतरूपेण सम्बिन्धिताः। यदा यासां प्रकियाणां मानसिकशक्तीनाञ्च प्रयोगः भवति तर्हि समस्यासमाधानं-सूक्ष्मचिन्तनं तथा परिस्थितिप्रभावी निराकरणात् अद्वितीयानि साधनानि समर्पितानि। येन आध्यात्मिकबुद्धेः आयामानां (Dimension) प्रकारचतुष्टयं वर्णितम्। तद्धि समीक्षात्मकास्तित्ववादीचिन्तनम्, (Critical Existential Thinking), व्यक्तिगतार्थोत्पादनम् (Personal Meaning Production), परात्पराभिज्ञता (Transcendental Awareness), चेतनावस्थाविस्तारः (Concious State Exapansion)।[1]

तात्पर्यमिदमस्ति आध्यात्मिकबुद्धिः पराभौतिकमानवीयानुभूतीषु आधारिता यदा व्यक्तिः स्वयमेव यासु स्थितीषु अनुभूयति तदा तस्य मानसिकशक्तिः समस्यासमाधानं सूक्ष्मचिन्तनं एवं परिस्थितीनां प्रभावीनिराकरणे स्वतः सहायतां कुर्वन्ति। अत एव इदं वक्तुं शक्यते यत् आध्यात्मिकबुद्धेः विभिन्नकारकाः मानवं समस्यासमाधानं सूक्ष्मचिन्तनं एवं कस्यापि परिस्थितेः दर्शनस्य योग्यतां ददति।

**प्राचीनं भारतीयदर्शनम्**

भारतीयदर्शनं व्यक्तेः सत्वरजस्तमादीनां गुणानां स्वीकरोति। एतेषां गुणानां प्रभावेण बुद्धिरपि त्रिधा भवति यथा सत्वगुणेन यथार्थबुद्धिः, रजगुणेन अयथार्थबुद्धिः चञ्चलबुद्धिर्वा अथ च तमः प्रभावेण विपरीता बुद्धिः भवति। यथा गीतायां वर्णितम्-

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी॥**
**यया धर्ममधर्मं च कार्यं चाकार्यमेव च।**
**अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी॥**
**अधर्मं धर्ममिति या मन्यते तमसावृता।**
**सर्वार्थान्विपरीताश्च बुद्धिः सा पार्थ तामसी॥**[2]

आसु तिसृषु बुद्धिषु सात्विकबुद्ध्या युक्तमनुष्यः एव सांसारिकभौतिकतायाः विमुक्तः अथवा कर्मयोगी अस्ति। गीतायाः द्वितीयेऽध्याये व्यवसायात्मिका बुद्धेः वर्णनं प्राप्यते- ''व्यवसायात्मिका बुद्धिरेके कुरुनन्दन''।[3] व्यवसायात्मिकबुद्धेस्तात्पर्य दृढप्रतिज्ञबुद्ध्या वर्तते या व्यक्तिम् अहर्निशं लक्ष्यकेन्द्रितं कृत्वा उद्यमशीलाय अभिप्रेरयति। पण्डितसातबालेकरस्य शब्देषु- 'व्यवसायात्मिकाबुद्धेः अर्थोऽस्त प्रयत्नकारिका बुद्धिः, निष्ठाधात्रीबुद्धिः, उद्योगिकाबुद्धिः, बारं बारं प्रयत्नस्योत्साहदायिका बुद्धिः च।

1. International Journal of Transpersonal Studies, 28(1), page-68-69
2. श्रीमद्भगवतद्गीता, अष्टादशध्यायः, 30-32
3. श्रीमद्भगवतद्गीता, द्वितीयोध्यायः, 41

भारतीयदर्शने बुद्धेः प्रज्ञा श्रेष्ठा। प्रज्ञाबुद्धयोः अतिसूक्ष्मो भेदः, प्रज्ञायां निरीक्षणे-चिन्तने-अवबोधने-मनने-स्मरणे-ज्ञानप्राप्त्यर्थ सर्वेषां कार्याणां समावेशो भवति। प्रज्ञायाः परिणामं ज्ञानम्। बुद्धिः समस्यासमाधाने लक्ष्यप्राप्त्यौ च सहायिका। बुद्धिस्तु कामक्रोध लोभादीवासनाभिः प्रभाविता भवितुं शक्नोति, परन्तु प्रज्ञायां स्थिरता भवति। प्रज्ञा सर्वदा सत्यानुसरणकारिका उच्चस्तरा बुद्धिः। अतैव योगसूत्रे बुद्धिकृते ऋतम्भरा शब्दस्य प्रयोगः कृतः, यथा ऋतम्भरा तत्र प्रज्ञा।

ऋतं सत्यमेव विभर्तीति ऋतम्भरा। तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते, तस्या ऋतम्भरा इति संज्ञा भवति।[1] शंकराचार्योऽपि प्रज्ञा विषये भणति यत् तस्मिन् प्रज्ञालोकेऽध्यात्मप्रसादे समाहितस्य या प्रज्ञा जायते विवेकजन्मा, तस्या विवेकजन्मनः ऋतम्भरेति संज्ञा भवति। ऋतम्भरा शब्दस्यार्थोऽस्ति- सात्विकी बुद्धिः, प्रज्ञा सा बुद्धिरस्ति या सत्यस्य मार्गानुसारिणी ज्ञानयुक्ता, समाधिजन्या बुद्धिः। अतः ऋतम्भरा प्रज्ञा सत्यानुगामिनी अविद्याविनिर्मुक्ता बुद्धिः। प्रज्ञायाः सन्दर्भे श्रीमद्भगवत्गीतायां विशदविवरणं प्राप्यते। श्रीमद्भगवत्गीतायाः द्वितीयाऽध्याये स्थितप्रज्ञस्य व्यापकं वर्णनमस्ति। सन्दर्भेऽस्मिन् इदमुल्लेखनीयमस्ति यत् गीतायां स्थितप्रज्ञमानवस्य यासां विशेषतानां वर्णनं कृतम्, तदैव प्रज्ञायाः अपि विशेषता वर्तते। प्रज्ञायां सुखदुःखयोः प्रभावं न दृश्यते तथा सा कामना-वासना-तृष्णा-भयात् विमुच्यते। सामान्यबुद्धेः तुलनायां प्रज्ञासत्यनिष्ठा ईश्वरप्रेम्णा संलिप्ता सर्वाभ्यः निम्नप्रवर्तिभ्यः मुक्ता निर्मला बुद्धिः। गीतानुसारं स्थितप्रज्ञस्य अथवा प्रज्ञावान् व्यक्तेः लक्षणानि अधोलिखितानि सन्ति।

**प्रजहाति यदा कामान्सर्वान्पार्थमनोगतान्।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥**
**दुःखेष्वनुद्विग्नमना सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधः स्थितधीमुनिरूच्यते॥**
**यः सर्वात्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।**
**नाभिनंदति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता॥**[2]

उक्तेन विवरणेन इदं स्पष्टं जायते यत् भारतीयदर्शने वर्णितं प्रज्ञायाः सम्प्रत्ययः आध्यात्मिकबुद्धेः नवीनसम्प्रत्ययः वा सामानान्तर-तथ्योऽस्ति। अतः भारतीयदर्शने आध्यात्मिकबुद्धेः सम्प्रत्ययः प्राचीनकालादेव विद्यमानोऽस्ति। ध्यातव्यमिदं तथ्यं यत् आध्यात्मिकबुद्धेः सामान्या बुद्धिः उच्चतरास्ति। अध्यात्मशब्दस्य अर्थः- आत्मतत्त्वस्य ज्ञानम् एवं स्वकीयानाम् उच्चाध्यात्मिकानां गुणानां विशेषतानां प्रेम-सौहार्द-शक्ति-सत्यनिष्ठादीनां ज्ञानमेवमस्ति। आध्यात्मिकबुद्धिः एतेषां अन्तःगुणानां तेषां विचाराणाम् अभिवृत्तेः व्यवहारस्य

1. पातञ्जलयोगदर्शनम् व्यासभाष्यम् 1-48
2. श्रीमद्भगवद्गीता, द्वितीयोध्यायः, 55-57

च प्रकटीकरणमस्ति। अध्यात्म सा अवस्था यत्र मनुष्यस्य अहं समाप्तो भवति, तस्य व्यक्तित्वे सद्गुणानां समावेशो जायते। आध्यात्मिकमूल्यं व्यक्तेः बाह्य-आन्तरिकसंसारं युज्यते। आध्यात्मिकबुद्धिः मनोधर्ममाध्यमेन कल्पितानां सर्वेषां विषयवासनानां परित्यागेन प्राप्ता भवति। मानवः सर्वेषां मानवानाम् आत्मतत्त्वस्य रूपे स्वीकुर्वन् धर्मः-राष्ट्रीयता-लिंग-जातीति आडम्बरेभ्यः विमुक्तो भवति। इदमित्थम् आध्यत्मिकबुद्धिः सा क्षमता या व्यक्तेः दृष्टिकोणं विस्तारयति। यदा व्यक्ति कस्यापि परिस्थितिविशेषे यदि स्वीयानुभूयते वा प्राप्यते तर्हि तस्य मानसिकशक्तयः समस्यायाः प्रभावी निराकरणे तस्य सहायतां कुर्वन्ति। वस्तुतः प्राचीनभारतीयदर्शने वर्णिता प्रज्ञा अर्वाचीनाध्यात्मिकबुद्धेः एव सम्प्रत्ययः। भारतीयदर्शने यस्याः प्रज्ञायाः अथवा आध्यात्मिकबुद्धेः वर्णनं प्राप्यते तया आध्यात्किबुद्ध्या संयुक्तो व्यक्तिः जीवनस्य क्षणभंगुरतां ज्ञात्वा सर्वेषां प्रति समभावः उदारदृष्टिकोणञ्च दर्शयति। निष्कर्षरूपेण वक्तुं शक्यते यत् बुद्धिः ज्ञानस्य स्वरूपा तथा च ज्ञानस्य विस्तारः एव प्रज्ञा अथवा आध्यात्मिका बुद्धिः वर्तते। अत एव व्यक्तित्व-विकासे केवलसामान्यबुद्धेः न अपितु भावात्मकाध्यात्मिकबुद्धेरपि महती आवश्यकता वर्तते।

* * *

## संदर्भग्रन्थसूची


- जायसवालः, सीतारामः, (2004), भारतीयमनोविज्ञानम् एवं शिक्षा, आर्य-बुक-डिपो, नई दिल्ली।
- तिलकः, बालगंगाधारः, सप्रे, माधावरावः (अनुवादकः)श्रीमद्भगवद्गीता : गीतारहस्यम्, शारदाप्रकाशनम्, नई दिल्ली,पृष्ठ-50, द्वितीय-अध्यायः (2010)
- पाण्डेयः, के. पी.,(2007), नवीनशिक्षामनोविज्ञानम्, विश्वविद्यालयप्रकाशनम्, वाराणसी।
- पालः, हंसराजः, (2006) प्रगतशिक्षामनोविज्ञानम्, हिन्दी-माध्यमम्, कार्यान्वयननिदेशालयः, दिल्लीविश्वविद्यालयः।
- विद्यालंकारः, जगदीशः भारतीयमनोविज्ञान, राधा-पब्लिकेशन, नई दिल्ली।
- शंकराचार्यः, विवेकचूड़ामणि, गीताप्रेस , गोरखपुर
- शुक्ला, लक्ष्मी, (2009), भारतीयमनोविज्ञानम्, ईर्स्टन-बुक-लिंकर्स, दिल्ली।
- शुक्लः, बदरीनाथः, (1979), वेदान्तसारः, मोतीलाल-बनारसीदास-प्रकाशनम्।
- सिंहः, अरुणकुमारः,(2005),उच्चतर-शिक्षा-मनोविज्ञानम्, मोतीलाल-बनारसीदास-प्रकाशनम्।
- Gardner , Howard , Intelligence Reframed: Multiple Intelligences for the 21st Century, Basic Books , (2000)
- Wiggleworth, Cindy (2012), SQ21: The Twenty-One Skills of Spiritual Intelligence, Select Books; 1st edition.

- Wolman , N., Richard (2001), Thinking with Your Soul: Spiritual Intelligence and Why It Matters, Hormony.


## वेब संदर्भ


- King, D. B., & DeCicco, T. L. (2009). King, D. B., & DeCicco, T. L. (2009). A viable model and self-report measure of spiritual intelligence. International Journal of Transpersonal Studies, 28(1),68–85.https://digitalcommons.ciis.edu/ijtstranspersonalstudies/vol28/iss1/8/18/08/2020.
- www.ijmae.com, International Journal of Management, Accounting and Economics ,Vol. 1, No. 2, September, 2014 , ISSN 2383-2126 (Online)
- https://shodhganga.inflibnet.ac.in/bitstream/10603/166246/10/10.%20chapter%20-%20i.pdf 18/08/2020


* * *

UGC- CARE Listed
अक्टूबर-दिसम्बर, 2020

शोधप्रभा
वर्ष : 45, चतुर्थोऽङ्कः

# भारतीय-ज्ञान-परम्परा में "स्त्री-शक्ति"

डॉ. अनिता स्वामी*

किसी भी युग अथवा देश की सामाजिक, राजनैतिक, आर्थिक व्यवस्था एवं तत्सम्बन्धी दृष्टिकोण का वास्तविक मूल्यांकन स्त्रियों की स्थिति एवं उनके विषय में प्रचलित धारणाओं के अध्ययन के बिना अपूर्ण है। भारतीय परिवार एवं समाज की धुरी "नारी" है। नारी ही "पुरुष" का सम्पूर्ण व्यक्तित्व अपने गर्भ में धारण करती है। वह अपने दर्शन एवं ज्ञान के आधार पर परिवार, समाज एवं देश को स्वरूप प्रदान करती है, पुरुष तो उस स्वरूप निर्माण में केवल पूरक मात्र है। भारतीय समाज प्रारम्भ से ही "तेन त्यक्तेन भुञ्जीथाः" के दर्शन एवं संस्कृति पर अवलम्बित समाज था। इसलिये वैदिक संस्कृति पर आधारित समाज ने भौतिक विकास की अपेक्षा आध्यात्मिक उन्नति पर बल दिया।

परन्तु वर्तमान आधुनिक युग में उपभोगवादी विचारधारा के बढ़ने के कारण सम्पूर्ण मानव समाज की विचारधारा में परिवर्तन होने से परिवार की धुरी बनकर रहनेवाली 'नारी' के दृष्टिकोण में भी आंशिक परिवर्तन आ रहा है। "वसुधैव कुटुम्बकम्" की विचारधारा संकुचित सी होती नजर आ रही है। वह "स्वतन्त्रता" एवं "स्वच्छन्दता" के भेद को समझ नहीं पा रही है। वह अपने ही पूरक एवं स्वरचना "पुरुष" से प्रतिस्पर्धा करने लगी है। इस प्रकार नारी के इस नवीन स्वरूप का प्रभाव समाज एवं राष्ट्र पर पड़ रहा है। इसी प्रकार आधुनिक जगत् में पुरुष ने स्त्री को केवल उपभोग की वस्तुमात्र समझ लिया है। उसे परस्त्री को माता एवं बहन के तुल्य समझना चाहिये यह भूल चुका है और अविवेकी होकर स्त्री के सम्मान एवं अस्मिता की रक्षा के दायित्व को भूल चुका है। आज हमारा शरीर तो भारतीय है परन्तु विचार नहीं।

वर्तमान परिप्रेक्ष्य में हमें विचार करना अत्यन्त आवश्यक है कि स्त्री एवं समाज के इस बदलते स्वरूप का उत्तरदायी क्या भारतीय दर्शन, साहित्य एवं संस्कृति है अथवा पाश्चात्य संस्कृति। क्योंकि वर्तमान में कुछ विचारकों का यह मानना है कि

*सहायक आचार्या, इन्द्रप्रस्थ महिला महाविद्यालय, दिल्ली विश्वविद्यालय, दिल्ली

भारतीय समाज जो कि वैदिक संस्कृति पर अवलम्बित समाज था उसने प्रारम्भ से ही स्त्री को निम्न माना है एवं स्त्री का शोषण किया है। उनके अनुसार सती-प्रथा, स्त्री-अशिक्षा, पर्दा-प्रथा, बाल-विवाह, जाति-भेद, लिङ्ग-भेद जैसी कुरीतियों से ग्रसित वैदिक समाज ने स्त्री को अपने मूलभूत अधिकारों जैसे समानता का अधिकार, सम्पत्ति का अधिकार, वेदशिक्षा के अधिकार से वंचित रखा है और वे इसके लिये स्मृति-ग्रन्थों के सन्दर्भों का प्रायः उल्लेख करते हैं जैसे मनुस्मृति इत्यादि। किन्तु वास्तव में उन सन्दर्भों में कितनी सत्यता है यह तभी सम्भव है जब हम वैदिक वाङ्मय अर्थात् श्रुति एवं स्मृति ग्रन्थों का वास्तविक अवलोकन एवं विश्लेषण करें।

वास्तविक अवलोकन से मेरा तात्पर्य मूल संस्कृत ग्रन्थों के पूर्ण अध्ययन से है किसी एक विशेष अंश मात्र से नहीं है क्योंकि सम्पूर्ण ग्रन्थ के अध्ययन से ही उस ग्रन्थ के प्रतिपाद्य विषय एवं उसकी एकवाक्यता का ज्ञान होगा। अतएव स्त्री-शक्ति विमर्श हेतु वैदिक वाङ्मय में नारी के स्वरूप का अवलोकन आवश्यक है -




इस अवलोकन के परिप्रेक्ष्य में यह जानना आवश्यक है कि

**श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी ।**[1]

श्रुति एवं स्मृति में विरोध उपस्थित हो तो श्रुति का प्राबल्य होगा। अतएव भारतीय-ज्ञान-परम्परा में नारी के स्वरूप को समझने के लिये हमें उसके आध्यात्मिक, आधिदैविक एवं आधिभौतिक स्वरूप को समझना आवश्यक है।

## (१) आध्यात्मिक-स्वरूप

वैदिक वाङ्मय के अनुसार सृष्टि के पूर्व मात्र एक तत्त्व विद्यमान था । ऋग्वेद (१०/१२९ सूक्त) के नासदीय सूक्त में कहा है -

---

1. मनुस्मृति पर कुल्लूकभट्टरचित मन्वर्थमुक्तावली टीका 2.13

**आनीदवातं स्वधया तदेकं तस्मात् ह अन्यत् न परः किं चनास ॥**

अर्थात् वह ब्रह्म तत्त्व ही प्राण से युक्त, अपनी क्रिया से शून्य और माया शक्ति के साथ अविभक्त रूप में विद्यमान था।

**सृष्टि-उत्पत्ति** के समय वह एक तत्त्व द्विविध हो गया। बृहदारण्यकोपनिषद् १/४/३ में कहा है कि-

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्। स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी च अभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः।**[1]

पहले पुरुष एकाकी था और उसका मन नहीं रमता था। उसने दूसरे की इच्छा की और अपने देह को (शरीर को) ही दो भागों में विभक्त कर दिया - पति और पत्नी रूप में। याज्ञवल्क्य ऋषि ने इस शरीर को अर्द्धबृगल (द्विदल अन्न के एक दल) के समान बताया है। यह (पुरुषार्द्ध) स्त्री से पूर्ण होता है । मनुस्मृति में भी कहा है -

**द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।**
**अर्धेन नारी तस्यां च विराजमसृजत्प्रभुः।।**[2]

अर्थात् ब्रह्मा ने अपने शरीर को दो भागों में विभक्त करके आधे भाग से पुरुष तथा आधे भाग से नारी हो गये उसी नारी में 'विराट्' संज्ञक पुरुष की सृष्टि की।

**वेद-व्यासजी** ने विष्णुपुराण में कहा है कि नर-नारी एक ही तेज की दो ज्योतियाँ हैं। ये ही आदि नर स्वायंभुव मनु एवं आदि नारी शतरूपा के नाम से प्रख्यात हुई।

**शतरूपां च तां नारीं तपोनिर्धूतकल्मषाम् ।**
**स्वायम्भुवो मनुर्देवः पत्नीत्वे जगृहे प्रभुः।।**[3]

श्रीमद्भागवत (३/१२/५२-५३) में भी कहा है कि 'क' ब्रह्माजी का नाम है। उन्हीं से विभक्त होने के कारण शरीर को 'काय' कहते हैं। उन दोनों विभागों से एक स्त्री-पुरुष का जोड़ा प्रकट हुआ। उनमें जो पुरुष था वह सार्वभौम सम्राट् स्वायम्भुव मनु हुए और जो स्त्री थी, वह उनकी महारानी शतरूपा हुई।

**कस्य रूपमभूद्-द्वेधा यत्कायमभिचक्षते ।**
**ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत।।**[4]

1. बृहदारण्यकोपनिषद् १/४/३
2. मनुस्मृति -१/३२
3. विष्णुपुराण - १/७/१७
4. श्रीमद्भागवत - ३/१२/५२

**यस्तु तत्र पुमान्सोऽभून्मनुः स्वायंभुवः स्वराट् ।**
**स्त्री चाऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः।।[1]**

सामवेद के कथन "एक एव द्विधा जातः" के द्वारा भी यही संकेत मिलता है कि ईश्वर ने स्वयं को प्रकट करने के लिये प्रकृति और पुरुष इन दो भागों में विभक्त किया। तदनुसार ईश्वर ने जो प्रकृति तत्त्व प्रकट किया उसे ही माया, महामाया या शक्ति कहते हैं। श्वेताश्वतर उपनिषद् में त्रिगुणात्मिका प्रकृति एवं माया शक्ति की अभिन्नता का निरूपण करते हुए कहा गया है कि प्रकृति ही माया है और महेश्वर उसके अधिष्ठाता। उसी प्रकृति-पुरुष से यह सम्पूर्ण जगत् व्याप्त है।

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**
**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।।[2]**

देवीभागवतपुराण में प्रकृति के शक्तिस्वरूप भाव का विस्तार प्राप्त होता है। आद्याशक्ति वह देवी भगवती सर्वात्मस्वरूपा है।

**"सर्वं खलु एव इदम् एव अहं नान्यद् अस्ति सनातनम् ।"[3]**

**( २ ) आधिदैविक-स्वरूप**

देवीभागवतमहापुराण के प्रारम्भ में (प्रथम अध्याय में) ही ब्रह्माजी एवं नारद के संवाद में ब्रह्माजी कहते हैं कि -

**त्रयाणां शक्तयस्तिस्रस्तद्ब्रवीमि तवानघ।**
**ज्ञानशक्तिः क्रियाशक्तिरर्थशक्तिस्तथापरा।।[4]**

तीन प्रकार की शक्तियाँ हैं - ज्ञानशक्ति, क्रियाशक्ति एवं अर्थशक्ति। शक्ति तत्त्वतः एक ही है किन्तु सत्व, रजस् एवं तमोगुण के भेद से उसके तीन रूप हो जाते हैं।

**सात्विकस्य ज्ञानशक्तौ राजसस्य क्रियात्मिका ।**
**द्रव्यशक्तिस्तामसस्य तिस्रश्च कथितास्तव ।।[5]**

देवीभागवत के अनुसार शक्ति के यही तीन रूप महालक्ष्मी, सरस्वती एवं महाकाली है। वह आद्याशक्ति सात्विकी रूप में महालक्ष्मी है, राजसिकी रूप में महासरस्वती है और तामसिकी रूप में महाकाली है । वह ब्रह्मा की सृजनशक्ति, विष्णु की पालनशक्ति और शिव की संहारशक्ति है ।

---

1. श्रीमद्भागवत - ३/१२/५३
2. श्वेताश्वतर उपनिषद् - ४/१०
3. देवीभागवतपुराण ७/३१-२
4. देवीभागवतमहापुराण - १/८/२५
5. देवीभागवतमहापुराण - १/८/२६

**तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा ।**
**महालक्ष्मीसरस्वत्यौ महाकालीति या स्त्रियः।।**[1]

भारतीय दर्शन में जगत् के कारण के रूप में भी आद्याशक्ति के रूप में ही प्रकृति, माया, त्रिगुणात्मिका शक्ति को स्वीकार किया गया है । अद्वैतवेदान्त के परम आचार्य आदि शंकर ने विवेकचूडामणि में भी कहा है-

**अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका परा ।**
**कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते ।।**[2]

अनादि, अविद्या, त्रिगुणात्मिका परारूपवाली अव्यक्तनामवाली परमेश्वर की शक्ति माया है जिससे यह समस्त जगत् उत्पन्न होता है। विद्वान् पुरुष उसे कार्यों के आधार पर जानते हैं। सांख्य दर्शन भी प्रकृति एवं पुरुष के संयोग से सृष्टि की उत्पत्ति को स्वीकार करता है।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ।।**[3]

इस प्रकार सृष्टि-उत्पत्ति एवं सृष्टि-संचालन के लिये युगल तत्त्व की आवश्यकता है। आचार्य शङ्कर ने "सौन्दर्यलहरी" में स्पष्टरूप से कहा है कि 'शिव' शक्ति के प्रभाव से ही शिवत्व की प्राप्ति करते हैं। शक्तिहीन होने पर वह स्पन्दहीन होकर शव बन जाएँगें ।

**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्।**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।।**[4]

आचार्य शङ्कर ने "शिवमानसस्तोत्र" में कहा है "आत्मा त्वं गिरिजा मतिः" अर्थात् आत्मा शिवतत्त्व है और बुद्धि "गिरिजा" है। आत्मा और बुद्धि यानि शिव और गिरिजा मिलकर ही रहते हैं।

इस प्रकार श्रुति एवं स्मृति ग्रन्थों का अवलोकन करने पर स्पष्ट रूप से ज्ञात हो जाता है कि दार्शनिक रूप से स्त्री एवं पुरुष को एक-दूसरे से अभिन्न एवं पूरक के रूप में स्वीकार किया गया है। प्रत्येक समाज का स्वरूप उसके दर्शन पर आधारित होता है। तत्कालीन समाज वैदिक दर्शन एवं विचार पर आधारित था इसलिये हमें तत्कालीन समाज में स्त्री का सामाजिक स्वरूप अर्थात् आधिभौतिक स्वरूप क्या था यह भी जानना आवश्यक है।

---

1. देवीभागवतमहापुराण १/२/२०
2. विवेकचुडामणि - १०८
3. सांख्यकारिका -२१
4. सौन्दर्यलहरी १

**( ३ ) आधिभौतिक-स्वरूप**




पुरातन भारतीय साहित्यों में नारी को देवी, माता, पत्नी, पुत्री (कन्या), भगिनी, पुत्रवधू के रूप में चित्रित किया गया है ।

भारतीय चिन्तन परम्परा के अन्तर्गत समाज में पत्नी के रूप में नारी का एक विशिष्ट एवं गौरवपूर्ण स्थान रहा है। ब्रह्मचर्य आश्रम का पालन करने के पश्चात् वह गृहस्थाश्रम में प्रवेश करती थी। अथर्ववेद ब्रह्मचर्य सूक्त (११/७/१८) में कहा गया है-

**ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।[1]**

विवाह संस्था द्वारा संयोजित होकर नारी 'स्त्री' पद को प्राप्त करती थी। पत्नी को पति की आत्मा का अर्धभाग माना गया है-

**अर्धो ह वा एष आत्मनो यज्जाया।[2]**
**अर्धो ह वा एष आत्मनो यत्पत्नी।[3]**
**अर्धात्मा वा एष यजमानस्य यत्पत्नी।[4]**

विवाह के पश्चात् ही 'पुरुष' यज्ञ का अधिकारी बनता है क्योंकि धर्मशास्त्र के अनुसार बिना पत्नी को साथ लिये किसी भी पुरुष को यज्ञ करने का अधिकार नहीं था। तैत्तिरीय ब्राह्मण (२/२/२/६) में कहा है -

**अयज्ञो वा एष योऽपत्नीकः।[5]**

ऋग्वेद के अनुसार "जायेदस्तम् - (ऋग्वेद - ३/५३/४)" अर्थात् पत्नी ही घर है। 'पत्नी ही घर है' के तात्पर्य को स्पष्ट करते हुए शतपथ ब्राह्मण में कहा गया

---

1. अथर्ववेद - ११/७/१८
2. शतपथ ब्राह्मण - ५/२/१/१०
3. तैत्तिरीय ब्राह्मण - ३/३/३/५
4. जैमिनीय ब्राह्मण - १/८६
5. तैत्तिरीय ब्राह्मण - २/२/२/६

है कि "गृहा वै पत्यै प्रतिष्ठा" (शतपथ ब्राह्मण - ३/३/१/१०) पत्नी से ही घर की प्रतिष्ठा है । क्योंकि घररूपी साम्राज्य का संचालन पत्नी ही करती थी। अथर्ववेद में कहा गया है-

**यथा सिन्धुर्नदीनां साम्राज्यं सुषुवे वृषा ।**
**एवा त्वं साम्राज्ञ्येधि पत्युरस्तं परेत्य ॥[1]**

जिस प्रकार रत्नवर्धक महासागर नदियों के साम्राज्य का उपभोग करते हैं, उसी प्रकार पतिगृह में पहुँचकर यह वधू स्वयं को साम्राज्ञी मानकर गृहस्थ साम्राज्य का संचालन करें। अथर्ववेद में नारी को गृहस्वामिनी बताते हुए अपनी विवेकपूर्ण वाणी से सबको वशीभूत करने का उपदेश प्राप्त होता है -

**गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदसि।[2]**

दाम्पत्य जीवन में प्रवेश करने का एक प्रयोजन श्रेष्ठ सन्तति को उत्पन्न करना था। अथर्ववेद में कहा गया है-

**अमोऽहस्मास्मि सा त्वं सामहमस्म्यृक् त्वं द्यौरहम्।**
**पृथिवी त्वम् । ताविह सं भवाव प्रजामा जनयावहै।[3]**

हे नारी ! मैं पुरुष प्राणतत्त्व विष्णु हूँ, तो आप ऋक् (ऋचा) है, मैं पुरुष द्युलोक (सूर्यशक्ति) हूँ तो आप सहनशीलता की प्रतीक पृथिवी हैं, हम दोनों परस्पर स्नेह से एकत्र होकर श्रेष्ठ सन्तति को जन्म दे।

माता-पिता की दृष्टि में पुत्र एवं पुत्री का स्थान सम था। इसलिये पुत्र की अपेक्षा योग्य पुत्री की प्राप्ति हेतु यज्ञादि भी किये जाते थे। बृहदारण्यकोपनिषद् ४/६/१७ में विदुषी पुत्री के इच्छुक माता-पिता को परामर्श दिया गया है -

**अथ य इच्छेद् दुहिता मे पण्डिता जायेत सर्वमायुरियादिति**
**तिलौदनं पाचयित्वा सर्पिष्मन्तम् अश्नीयाताम् ईश्वरौ जनयितवै ।[4]**

जो चाहता हो कि मेरी पुत्री विदुषी हो और पूरे सौ वर्षों की आयु तक जीवित रहे, वह और उसकी पत्नी तिल और चावल की खिचरी पकाकर उसमें घी मिलाकर खायें। इससे वे उक्त योग्यता वाली कन्या को जन्म देने में समर्थ होते हैं।

मनुस्मृति में भी लिखा है कि अपने वंश की वृद्धि के लिये दक्ष प्रजापति ने प्राचीनकाल में 'पुत्रिका' को उत्पन्न किया ।

---

1. अथर्ववेद - १४/१/४३
2. अथर्ववेद - १४/१/२०
3. अथर्ववेद - १४/२/७१
4. बृहदारण्यक उपनिषद् ६/४/१७

**अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिका ।**
**विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥[1]**

**समानता का अधिकार - शिक्षा**

वैदिक परिवार में पुत्री को पुत्र के समान शिक्षा का अधिकार तथा अवसर प्राप्त थे। पुत्र के समान ही उन्हें उपनयन का अधिकार था और वेदों को पढ़ने तथा यज्ञ करने की भी पूरी स्वतन्त्रता थी। दैवरात विरचित 'वेदार्थ कल्पलता' में नारी के उपनयन संस्कार को बताया गया है तदुपरान्त ही कन्या यज्ञ करने की अधिकारी बनती थी।

**नारीणामपि चेष्यते भुवि पुराकल्पे श्रुतेः संस्कृतिः ।**
**मौञ्जीबन्धनतस्तथोपनयनं सद्धर्मसंसाधनम् ॥**
**गायत्र्याः परवेदमन्त्रमुखतो ब्रह्मोपदेशः परः**
**स्याद् वेदाध्ययनादिकं श्रुतिमुखात् सर्वं समानं स्त्रियः ॥[2]**

यज्ञ करने हेतु उपनयन संस्कार की आवश्यकता को बताते हुए कहा है-

**या कन्या उपानयेन रहित नैव द्विजाः स्युः पुनर् ।**
**नोद्वाहाय मता विनोपनयनं यज्ञार्हता यान्ति ताः ॥[3]**

श्रुतिविद् स्त्री ही श्रौत-यज्ञ करने योग्य है तथा उसी से वैदिक संस्कृति की प्रगति भी सत्वगुण सम्पन्न स्त्री से ही बतायी गयी है ।

**श्रौते यज्ञमुखे सदा श्रुतिविदां स्त्रीणां च यज्ञार्हता।**
**तासां वैदिकसंस्कृतेः प्रगतितो वैशिष्ट्यसत्त्वोर्जिता॥[4]**

वैदिककाल में शिक्षित स्त्री के तीन स्वरूप प्राप्त होते हैं -




1. मनुस्मृति - ३/१२८
2. वेदार्थकल्पलता, षष्ठी कला -८
3. वेदार्थकल्पलता, षष्ठी कला -३०
4. वेदार्थकल्पलता, षष्ठी कला -१५

सामान्य रूप से शिक्षिता नारी के दो भेद थे – ब्रह्मवादिनी (उच्चशिक्षिता) तथा सद्योवादिनी।

**ब्रह्मवादिनी** – ब्रह्मवादिनी स्त्री का लक्षण वेदार्थकल्पलता में इस प्रकार है –

**गायत्र्याः परवेदमन्त्रमुखतो ब्रह्मोपदेशात् स्त्रियः**
**स्वाध्यायाध्ययनाद् धियां सुनियमाद् सद्ब्रह्मचर्यव्रतात्।**
**ज्ञानान्मानवती हृदा च वयसा प्रौढा सुविद्यादिना**
**पश्चादेव विवाहतश्च गृहिणी स्याद् ब्रह्मवादिन्यसौ।।**[1]

ब्रह्मवादिनी स्त्री ब्रह्मोपदेश को प्राप्त कर ब्रह्मचर्य का पालन करती हुई ब्रह्म-चिन्तन तथा ब्रह्म-विषयक व्याख्यान में अपना तपःपूत जीवन व्यतीत करती थी। ब्रह्मवादिनी स्त्री अविवाहिता रहकर ब्रह्म-साधना में रत रहती थी अथवा प्रौढ़ आयु में विवाह करके गृहिणी पद को प्राप्त करती हुई ब्रह्म-साधना में लीन रहती थी।

**बृहदारण्यक**- उपनिषद् (३/६/१) में विदुषी गार्गी की चर्चा है वह अविवाहित ब्रह्मवादिनी थी । गार्गी ने जनक की विद्वद्गोष्ठी में भाग लेकर याज्ञवल्क्य जैसे प्रकाण्ड विद्वान् को अपने दार्शनिक प्रश्नों से उलझन में डाल दिया था । याज्ञवल्क्य ऋषि की दो पत्नियाँ थी – कात्यायनी एवं मैत्रेयी । उनमें मैत्रेयी ब्रह्मवादिनी थी और कात्यायनी स्त्रीप्रज्ञा वाली थी।

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च**
**तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञेव तर्हि कात्यायनी।।**[2]

गृहस्थाश्रम का परित्याग कर संन्यासाश्रम में प्रवेश करने के इच्छुक याज्ञवल्क्य ने जब स्वधन का बँटवारा कात्यायनी एवं मैत्रेयी के बीच करना चाहा तब ब्रह्मवादिनी मैत्रेयी ने सम्पत्ति के लिये मना करते हुए कहा कि-

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्या यदेव भगवान्वेद तदेव मे ब्रूहीति।**[3]

उस मैत्रेयी ने कहा- जिससे मैं अमर नहीं हो सकती, उसे लेकर मैं क्या करूँगी? श्रीमान् जो कुछ अमृतत्व साधन जानते हों, वही मुझे बतलावे । तत्पश्चात् याज्ञवल्क्य ऋषि ने मैत्रेयी को ब्रह्म का उपदेश किया ।

**उपाध्याया**- ब्रह्मवादिनी नारियाँ शिक्षणकार्य भी करती थीं एवं उन्हें 'उपाध्याया' कहा जाता था (उपेत्याधीते अस्याः 'सा उपाध्याया' पाणिनी व्याकरण – ३/८/२२)

1. वेदार्थकल्पलता – ६/४
2. बृहदारण्यकोपनिषद् – ४/५/१
3. बृहदारण्यकोपनिषद् – २/३/४

**ऋषिका**– स्त्री ऋषियों के सन्दर्भ में ऋषित्व की वही अवधारणा है जो पुरुष ऋषियों के सम्बन्ध में है। इन स्त्री ऋषिकाओं ने तपोबल से ऋतम्भरा प्रज्ञा को प्राप्त कर मन्त्रों का साक्षात्कार किया इसलिये ऋषि पद को प्राप्त किया। शौनक ने स्त्री ऋषियों को आर्षानुक्रमणी में मुनि (पौलोमी शची नाम मुनिः स्मृतः। आर्षानुक्रमणी - १०/८२) तथा बृहद्देवता में 'ब्रह्मवादिनी' और ऋषि कहा है– (रात्रि सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः । बृहद्देवता - २/८४)

बृहद्देवता में २७ ब्रह्मवादिनी ऋषियों का एकत्र परिगणन प्राप्त होता है–

**घोषा गोधा विश्ववारा अपालोपनिषन्निषत् ।**
**ब्रह्मजाया जुहूर्नाम अगस्त्यस्य स्वसादितिः ॥**
**इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ।**
**लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ।**
**श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।**
**रात्री सूर्या च सावित्री ब्रह्मवादिन्यः ईरिताः॥**[1]

**सद्योवधू** - देवरात ने सद्योवधू स्त्री का लक्षण करते हुए कहा है–

**पूर्व शास्त्रविधेः कृतोपनयना ब्रह्मोपदेशादिना**
**वेदादेर्व्रतधारणात् सुनियता सद्योवधूः सा भवेत् ।**
**उद्वाहात् सहचारिणी स्वपतिना यज्ञादिधर्माश्रयात्**
**पश्चाद् वेदमुखेन चाभ्यसनतस्तिष्ठेद् गृहस्थाश्रमे॥**[2]

सद्योवधू वैवाहिक जीवन में पति की सहचारिणी बनकर धार्मिक कृत्यों को करने के लिये वैदिक शिक्षा को ग्रहण कर नियमों को धारण करती थी एवं गृहस्थाश्रम में प्रवेश करती थी तथा सन्तानोत्पत्ति के समय पति उसका गुरु बनकर ज्ञान देता था।

**सह-शिक्षा**

श्रुति एवं स्मृति ग्रन्थों में स्त्री पुरुषों के साथ गुरुकुलों में शिक्षण प्राप्त करती थी, पुरुषों की ही भाँति यज्ञोपवीत धारण करती थी। (ऋग्वेद १/२२/९-१०, ५/२८/१-३)

भवभूति के मालती-माधव में कामन्दकी की शिक्षा-दीक्षा 'भूरिवसु' तथा 'देवराट्' के साथ एक ही आचार्य के पास हुई थी तथा 'उत्तररामचरितम्' में आत्रेयी, लव और कुश के साथ वाल्मिकी ऋषि के आश्रम में शिक्षा प्राप्त करती है।

**नारी का सम्मान**–

श्रुति एवं स्मृति काल में 'पत्नी' एवं 'माता' का पद विशेष सम्माननीय था।

---

1. बृहद्देवता - २/८२-८४
2. वेदान्तकल्पलता ६/५

मनुस्मृति में कहा गया है कि दस उपाध्यायों से बढ़कर एक 'आचार्य', सौ आचार्यों से बढ़कर एक पिता, सहस्र पिता से बढ़कर एक माता होती है-

**उपाध्यायान् दशाचार्य आचार्याणां शतं पिता ।**
**सहस्रं तु पितृन् माता गौरवेणातिरिच्यते ।।**[1]

आपस्तम्ब धर्मसूत्र कहता है "माता पुत्रत्वस्य भूयांसि कर्माणि आरभते।" तस्यां शुश्रूषा नित्या - (११०/२८/९)। मत्स्य पुराण कहता है- गर्भधारणपोषाभ्यां तेन माता गरीयसी - (२२७/१५०)। इस प्रकार नारी के सभी रूपों में सबसे अधिक गौरवशाली मातृरूप है ।

शतपथ ब्राह्मण में पत्नी को पति का परम मित्र एवं साक्षात् सरस्वती कहा गया है -

**पत्नी परमं मित्रम्।**[2]
**योषा वै सरस्वती।**[3]
**सखा ह जाया।**[4]

शतपथ ब्राह्मण (१३/२/६/७) में पत्नी को लक्ष्मी का स्वरूप बताया गया है। पुरुषों द्वारा पूज्या, वन्दनीया होने के कारण उन्हें "मैना" कहा जाता है (निरुक्त - ३/४/२१) । मनुस्मृति में कहा गया है-

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः।।**[5]

जिस कुल में स्त्रियों की पूजा होती है, उस कुल पर देवता प्रसन्न होते हैं और जिस कुल में स्त्रियों की पूजा नहीं होती उस कुल में सब कर्म निष्फल होते हैं।

**सम्पत्ति का अधिकार**

पति के जीवित रहने पर पत्नी की सम्पूर्ण आवश्यकताओं का दायित्व पति का होता था तथा पति-पत्नी दोनों मिलकर सम्पूर्ण दायित्वों का निर्वाह करते थे। पति के संन्यास ग्रहण करने पर पत्नी पति की सम्पत्ति प्राप्त करने के लिये अधिकृत थी। महर्षि याज्ञवल्क्य की पत्नी मैत्रेयी एवं कात्यायनी इसका उदाहरण है।

- इसके अतिरिक्त स्त्रियाँ 'ऋत' की वेधा अर्थात् नीति और नियमों का निर्माण करती थी ।

---

1. मनुस्मृति - २/१४५
2. शतपथ ब्राह्मण - २/५/१/१०
3. शतपथ ब्राह्मण - २/६/१/११
4. ऐतरेय ब्राह्मण - ७/३/१३
5. मनुस्मृति - ३/५६

- वे 'सभा' और 'समिति' जैसी शासकीय संस्थाओं के सदस्य के रूप में चयनित होती थी।

**अहं वदामि नेत्वं सभायामह त्वं वद।**[1]

- पुरंधि (१०/८०/६) के रूप में नगर सम्बन्धी व्यवस्थाओं में भी उनकी महत्त्वपूर्ण भूमिका मानी जाती थी। शुक्ल यजुर्वेद की राष्ट्रीय प्रार्थना में स्त्रियों के 'पुरंधि' होने की कामना अभिव्यक्त की गयी है-

**आ ब्रह्मन्ब्रह्मणो ब्रह्मवर्चसी जायताम् आ ............**
**पुरन्धिर्योषा जिष्णू रथेष्ठाः .....कल्पताम्।**[2]

- स्त्रियाँ विदथों (लोककल्याणकारी सामाजिक संस्थाओं) में स्पष्ट शब्दों में अपने मत को अभिव्यक्त करने का अधिकार रखती थी।[3]
- वैदिक-शिक्षा एवं धर्म के प्रचार-प्रसार में भी स्त्रियाँ सहयोगिनी थीं । ब्रह्मवादिनी घोषा इसका उदाहरण है।
- ऋग्वेद में नारियों के युद्ध में भागीदारी करने का भी उल्लेख प्राप्त होता है। नमुचि के आधिपत्य में अलग से स्त्रीसेना थी, जिसने इन्द्र से युद्ध भी किया था तथा युद्ध में विपशला की कटी टाँगों का लौह टाँग से अश्विनी कुमारों ने प्रत्यारोपण भी किया था। - आद्यादत्त ठाकुर "वेदों में भारतीय संस्कृति"।
- रामायणकाल में कैकेयी युद्ध-कौशल की धनी थी । एक बार देवराज इन्द्र का सम्बरासुर से युद्ध हो गया तब राजा दशरथ के साथ कैकेयी भी सहायता के लिये गयी थी और दो अवसरों पर राजा दशरथ के प्राणों की रक्षा की थी।
- विष्णु पुराण में चित्रलेखा का उल्लेख है,जो कुशल चित्रकार थी तथा अनेक देवों तथा गन्धर्वों के चित्र बनाए थे। इस प्रकार स्त्रियाँ भी चित्रकला में सिद्धहस्त थीं।
- ब्रह्मवादिनी अपाला कृषिकर्म निष्णात्, नृत्य विशारद, गौ दुहने में तथा परिधान-निर्माण में सिद्धहस्त थी।
- वैदिक स्त्रियाँ मोक्ष की अधिकारी थीं । गार्गी द्वारा "ब्रह्मचर्य आश्रम" में, चूडाला द्वारा "गृहस्थाश्रम" में, मैत्रेयी द्वारा "वानप्रस्थाश्रम" में तथा सुलभयोगिनी द्वारा "संन्यासाश्रम" में मोक्ष प्राप्त किया गया।

## वैदिक काल में सती-प्रथा का अभाव

वैदिक-काल में पति की मृत्यु होने पर स्त्री का चिताग्नि में जलने का उदाहरण अप्राप्य है। तत्कालीन समय में 'सत्त्वगुण' प्रधान स्त्री को सती कहा जाता

---

1. अथर्ववेद ७/३८/४
2. शुक्लयजुर्वेद २२/२२
3. ऋग्वेद - १०/८५

